तयार्चञ्छ्राम्यंश्चचार प्रजाकामः। तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिर्याम्वेनयां काञ्चाशिषमाशास्तु सास्मै सर्वा समार्द्ध्यत ॥ १० ॥

सैषा निदानेन यदिडा। स यो हैवंविद्वानिडया चरत्येताᳬं हैव प्रजातिं प्रजायते यां मनुः प्राजायत याम्वेनया काञ्चाशिषमाशास्तु सास्मै सर्वा समृद्ध्यते ॥ ११ ॥

सा वै पञ्चावत्ता भवति। पशवो वा इडा पाङ्क्ता वै पशवस्तस्मात्पञ्चावत्ता भवति ॥ १२ ॥

स समवदायेडाम्। पूर्वार्द्धे पुरोडाशस्य प्रशीर्य पुरस्ताद् ध्रुवायै निदधाति ताᳬं होत्रे प्रदाय दक्षिणात्येति ॥ १३ ॥

स होतुरिह निलिम्पति। तद्धोतौष्ठयोर्निलिम्पते मनसस्पतिना ते हुतस्याश्नामीषे प्राणायेति ॥ १४ ॥

---

याजान् ॥ तयार्चन् श्राम्यंश्चचार–प्रजाकामः। तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिः, याम्वेनया काञ्चाशिषमाशास्त–सास्मै सर्वा समार्द्ध्यत ॥ सैषा निदानेन–यदिडा। स यो हैवंविद्वानिडया चरति–एतां हैव प्रजातिं प्रजायते–यां मनुः प्राजायत; याम्वेनया काञ्चाशिषमाशास्ते–सास्मै सर्वा समृद्ध्यते ॥

सा वै पञ्चावत्ता भवति। पशवो वा इडा, पाङ्क्ता वै पशवः। तस्मात् पञ्चावत्ता भवति ॥ स समवदायेडाम्, पूर्वार्द्धे पुरोडाशस्य प्रशीर्य, पुरस्ताद् ध्रुवायै निदधाति; तां होत्रे प्रदाय दक्षिणात्येति ॥ स होतुरिह निलिम्पति। तद्धोतौष्ठयोर्निलिम्पते–'मनसस्पतिना ते हुतस्यावद्यति ॥

---

**तयार्चन्**। 'तया' सह दर्शपूर्णमासयोर्देवार्चनव्रतलक्षणं 'तपः' 'श्राम्यन्' कुर्वन् 'चचार' 'तया' हेतुभूतया,–'इमाम् प्रजातिम्'–प्रजायत इति प्रजातिः,–ततो 'याम्वेनया'–इत्यादि तत्करणफलम् ॥ १० ॥ ११ ॥

**सा वै पञ्चावत्ता**। उपस्तरणादिविशेषः शाखान्तरात्। 'पशवो वा इडा' पशुप्रभवघृतादिप्रभवत्वात् "पशव इडा" ( तै. सं. २।६।७।३ ) ( ऐ. २।४।६ ) ॥ १२ ॥

**स समवदाय**। प्रसन्ना ॥ १३ ॥

**स होतुरिह**। इहेत्यभिनयेन प्रदेशिनीपर्वमध्यमं दर्शयति, शाखान्तरात् ॥ १४ ॥

---

१–'म्वेन यां' च.। २–'समार्ध्यत' झ.। ३–'हैव्वंवि' च.। ४–'वै' क.। ५–'पूर्व्वार्द्धे' ख. 'पूर्वार्धे' ग. झ.। एवमन्यत्रापि प्रायेण द्वित्वाभावः। ६–'येति' ख. ग. झ.। 'त्रि' च.।

अथ होतुरिह निलिम्पति । तद्धोतौष्ठयोर्निलिम्पते व्वाचस्पतिना ते हुतस्याश्नाम्यूर्जे ऽउदानायेति ॥ १५ ॥

एतद्ध वै मनुर्बिभयाञ्चकार । इदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै म ऽइह रक्षाᳬसि यज्ञं न हिᳬस्युरिति तामेतत् पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्येव प्रापयत तथो ऽएवैनामेष ऽएतत् पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्येव प्रापयतेऽथ यत् प्रत्यक्षं न प्राश्नाति नेदनुपहूतां प्राश्नानीत्येतदेवैनां प्रापयते यदोष्ठयोर्न्निलिम्पते ॥ १६ ॥

अथ होतुः पाणौ समवद्यति । समवत्तामेव सतीं तदेनां प्रत्यक्षᳬ होतरि श्रयति तयात्मञ्छ्रितया होता यजमानायाशिषमाशास्ते तस्माद्धोतुः पाणौ समवद्यति ॥ १७ ॥

---

श्नामि-इषे प्राणाय' इति ॥ अथ होतुरिह निलिम्पति । तद्धोतौष्ठयोर्निलिम्पते-'वाचस्पतिना ते हुतस्याश्नामि-ऊर्जे उदानाय' इति ॥ एतद्ध वै मनुर्बिभयाञ्चकार-'इदं वै मे तनिष्ठं यज्ञस्य-यदियमिडा पाकयज्ञिया; यद्वै म इह रक्षांसि यज्ञं न हिंस्युः' इति । तामेतत् 'पुरा रक्षोभ्यः पुरा रक्षोभ्य-इत्येव प्रापयत । तथो एवैनामेष एतत् पुरा रक्षोभ्यः पुरा रक्षोभ्य-इत्येव प्रापयते । अथ यत् प्रत्यक्षं न प्राश्नाति- नेदनुपहूतां प्राश्नानि-इति । एतदेवैनां प्रापयते-यदोष्ठयोर्निलिम्पते ॥ अथ होतुः पाणौ समवद्यति । समवत्तामेव सतीं तदेनां प्रत्यक्षं होतरि श्रयति । तयात्मन्-श्रितया होता यजमानायाशिषमाशास्ते तस्माद्धोतुः पाणौ समवद्यति ॥

---

**अथ होतुरिह** । 'इह'-इति हेत्वन्तरम्; शाखान्तरादेव । **ओष्ठयो**रिति । अत्राविशेषेण 'निलिम्पते' निर्लिम्पेदिति श्रुतिः; शाखान्तरे तु-अधरमधर उत्तरमुत्तरे । किं पुनर्निलिम्पते ? द्रवत्वात्, सन्निधानाद्, अदनीयत्वाच्च-आज्यम् । तत्रापि "एतदेवैनां प्रापयते" इतीडानिष्क्रयवचनादिडमेवाज्यमिति गम्यते ॥ १५ ॥

**एतद्ध वै मनुः** । निर्लेपार्थवादोऽयम् । 'बिभयाञ्चकार' भीतः । 'तनिष्ठम्' तनुतमम्, 'पाकयज्ञिया' पाकयज्ञार्हा, मनुष्यप्रधानत्वान्मन्दतरवीर्येत्यभिप्रायः । 'यद्' 'इयम् इडा' । 'यत्' 'इह' तनिष्ठे देशे 'यज्ञं न हिंस्युः' महत् स्यादिति शेषः । एवं भीतः बिभ्यत् । **तामेता**दिति । 'ताम्' इडाम् 'एतद्' यद् "ओष्ठयोर्निलिम्पते"-इति वक्ष्यते, तत् 'पुरा रक्षोभ्यः' यावदेवोच्चैरुपह्वानं श्रुत्या रक्षांसि नागच्छन्ति-तावत् 'प्रापयत'-"प्राणेष्वेव हूयते"-इति वक्ष्यते-तं प्राणदेशं प्रापितवान् । 'पुरा रक्षोभ्यः, पुरा रक्षोभ्यः' इति द्विर्वचनं प्रयोगान्तरव्याप्त्यभिप्रायम् ( पा. ८।१।१ वा. ४ ) ॥ १६ ॥

**अथ होतुः** । अवान्तरेडावदानमेतत् ॥ १७ ॥

---

१-'हुत' ख. ग. झ. । २-'म्यूर्ज्जे ऽ' ग. च. । ३-'इह' च. । ४-'दुनपहूतां' क. । ५-'प्राश्नामी' ख. ग झ. । ६-'म्पू' ग. झ. । ७-'तै' च. । ८-'तयात्मंछ्रितया' ग. झ. । 'तयात्मंच्छ्रतया' च. । ९-'ति' च. । १०-निलिम्पेदिति श्रुतम्-ज. झ. । ११-'तत्राज्ये तदेवैनां-ज. झ. ।

अथोपाꣳशूपह्वयते । एतद्ध वै मनुर्बिभयाञ्चकारेदं वै[2] मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै म ऽइह रक्षाꣳसि यज्ञं न हन्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्युवोपाꣳशूपाह्वयत तथो ऽएवैनामेष[3] ऽएतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्युवोपाꣳशूपह्वयते ॥ १८ ॥

स उपह्वयते । उपहूतꣳ रथन्तरꣳ सह पृथिव्योप मा ꣳ रथन्तरꣳ सह पृथिव्या ह्वयतामुपहूतं वामदेव्यꣳ सहान्तरिक्षेणोप मां[4] वामदेव्यꣳ सहान्तरिक्षेण ह्वयतामुपहूतं बृहत् सह दिवोप मां बृहत् सह दिवा ह्वयतामिति तदेतामेवैतदुपह्वयमान ऽइमांश्च लोकानुपह्वयत ऽएतानि च सामानि[6] ॥ १९ ॥

---

अथोपांशूपह्वयते । एतद्ध वै मनुर्बिभयाञ्चकार—'इदं वै मे तनिष्ठं यज्ञस्य—यदियमिडा पाकयज्ञिया; यद्वै म इह रक्षांसि यज्ञं न हन्युः' इति । तामेतत्पुरा रक्षोभ्यः—पुरा रक्षोभ्य—इत्येवोपांशूपाह्वयत । तथो एवैनामेष एतत् पुरा रक्षोभ्यः—पुरा रक्षोभ्य—इत्येवोपांशूपह्वयते ॥ स उपह्वयते । **उपहूतं रथन्तरं सह पृथिव्या, उप मां रथन्तरं सह पृथिव्या ह्वयताम् । उपहूतं वामदेव्यं सहान्तरिक्षेण, उप मां वामदेव्यं सहान्तरिक्षेण ह्वयताम्; उपहूतं बृहत सह दिवा, उप मां बृहत सह दिवा ह्वयताम्**—इति । तदेतामेवैतदुपह्वयमान इमांश्च लोकानुपह्वयते—एतानि च

---

**अथोपांशु** । अत ऊर्ध्वं हौत्रमिडोपह्वानं विधीयते, तदपि द्विविधम्—उपांशु चोच्चैश्च । तत्र प्रथमं तावदुपांशूपह्वानं युज्यते । उपपूर्वो ह्वयतिरभ्यनुज्ञायां वर्तते—उपांश्वनुजानीत इत्यर्थः । **एतदिति** । 'बिभयाञ्चकार' भीतः—बिभ्यत्, पूर्ववद्व्याख्या । इयं हि इडा सर्वैः ऋत्विग्यजमानैर्विभज्य भक्षणीया, तत्र चोनातिरेकाशङ्कानिवृत्तये परस्परमनुज्ञातव्यम्; तच्चैतत्साधारणमेवानुज्ञातं मध्यमस्थानीयो होता सर्वैरन्वारब्धः करोति ॥ १८ ॥

**स उपह्वयते** । यदीडानुज्ञातव्या, रथन्तरादीनां किमापतितम्? अत आह—**तदेतामेवैतदिति** । इडाया एवैतानि रथन्तरादीनि पृथिव्यादीनि च रूपाणि, ततश्च तस्यामुपहूतायां तान्युपहूतानि भवन्ति,—तेषु चोपहूतेषु सोपहूता भवतीत्याधिदैविकीं विभूतिं ख्यापयितुं तद्द्वारेणैवोपह्वयते । तथा च क्वचिदाह "तदेनां परोक्षमुपह्वयते" इति । **उप मां रथन्तरमिति** । सर्वत्र रथन्तरादिमयी इडा देवता, तां नार्हन्त्यननुज्ञाता मनुष्या भक्षयितुम्; अतः सानुज्ञाप्यते—**मामिति** । एतच्च तुल्यहेतुत्वात्सर्वेषामृत्विग्यजमानानां प्रदर्शनार्थम् ॥ १९ ॥

---

१—'बिभयां चकार' ख. ग. झ. । एवं प्रायेण सर्वत्रैवामन्तस्य पृथक्कृतिः । २—'व्वै' च. । ३—'मेष' झ. । ४—'मां' ग. झ. । ५—'मेवैत' क. । ६—'सामानि' च. । ७—तच्चै तत्साधारणमेवानुज्ञानं—झ. ।

उपहूता गावः सहऽर्षभा ऽइति । पशवो वा ऽइडा तदेनां परोऽक्षमुपह्वयते सहऽर्षभा ऽइति समिथुनामेवैनामेतदुपह्वयते ॥ २० ॥

उपहूता सप्तहोत्रेति । तदेनाᳬ सप्तहोत्रा सौम्येनाध्वरेणोपह्वयते ॥ २१ ॥

उपहूतेडा ततुरिरिति । तदेनां प्रत्यक्षमुपह्वयते ततुरिरिति सर्वᳬ ह्येषा पाप्मानं तरति तस्मादाह ततुरिरिति ॥ २२ ॥

उपहूतः सखा भक्ष ऽइति । प्राणो[3] वै सखा भक्षस्तत् प्राणमुपह्वयत ऽउपहूतᳬ हेगिति तच्छरीरमुपह्वयते तत्सर्वामुपह्वयते ॥२३॥

अथ प्रतिपद्यते । इडोपहूतोपहूतेडापो ऽअस्मां ३ ऽइडा ह्वयतामिडोपहूतेति तदुपहूतामेवैनामेतत्सतीं प्रत्यक्षमुपह्वयते या वै सासीद्गौर्वै सासीच्चतुष्पदी वै गौस्तस्माच्चतुरुपह्वयते ॥ २४ ॥

स वै चतुरुपह्वयमानः। अथ नानेवोपह्वयतेऽजामितायै जामि ह कुर्याद्यदिडोपहूतेडोपहूतेत्येवोपह्वयेतोपहूतेडेति त्वेडोपहूतेति तदर्वाचीमुपह्वयत ऽउपहूतेडेति तत्पराचीमुपो ऽअस्मां३ ऽइडा ह्वयतामिति तदात्मानञ्चैवैतन्नान्तरेत्यन्यथेव च भवतीडोपहूतेति तत्पुनरर्वाचीमुपह्वयते तदर्वाचीञ्चैवैनामेतत्पराचीञ्चोपह्वयते ॥ २५ ॥

सामानि ॥ उपहूता गावः सहर्षभा इति । पशवो वा इडा । तदेनां परोक्षमुपह्वयते । सहर्षभा इति– समिथुनामेवैनामेतदुपह्वयते ॥ उपहूता सप्तहोत्रा इति–तदेनां सप्तहोत्रा सौम्येनाध्वरेणोपह्वयते ॥ उपहूतेडा ततुरिः इति–तदेनां प्रत्यक्षमुपह्वयते । ततुरिरिति । सर्वं ह्येषा पाप्मानं तरति–तस्मादाह ततुरिरिति ॥ उपहूतः सखा भक्षः–इति । प्राणो वै सखा भक्षः–तत् प्राणमुपह्वयते । उपहूतं हेग्–इति । तत् शरीरमुपह्वयते । तत् सर्वामुपह्वयते ॥ अथ प्रतिपद्यते–इडोपहूता (१) उपहूतेडा–(२) उपो अस्मान इडा ह्वयताम् (३) इडोपहूता–(४) इति । तदुपहूतामेवैनामेतत् सतीं प्रत्यक्षमुपह्वयते । या वै सासीद्–गौर्वै सासीद् । चतुष्पदी वै गौः । तस्माच्चतुरुपह्वयते ॥ स वै चतुरुपह्वयमानः–अथ नानेवोपह्वयते

उपहूता गावः । प्रसन्नाश्वतस्तः। 'प्राणः' 'शरीरम्' इडाया एतद् द्वयम् ॥२०॥२१॥२२॥२३॥

अथ प्रतिपद्यते । "अथोपांशूपह्वयते" इति यदुक्तम्, तस्याविच्छेदार्थम् 'अथ प्रतिपद्यते' इत्याह । तेनेत ऊर्द्ध्वं यथाप्राप्तमुच्चैर्वक्तव्यम ॥ २४ ॥

प्रसन्नाश्वतस्तोऽतः परम् । "वत्सा वै दैव्या अध्वर्यवः"–इति सान्नाय्यं हविः संभवति–अध्वर्युत्र-

• १–'सुर्व्वᳬ' च । २–'ततुरिरिति' ख. ग. झ. 'ततुरिरित्' च. । ३–'प्राणो' ख. ग. च. झ. । ४–'तच्छरीर' ख. ग. झ. । ५–'ह्वयते' ग. । ६–'त्वे' ग. च. । ७–'प्रति' ख. ग. झ. । ८–'अस्मां २॥ऽइ' ख. ग. च. झ. । 'अस्मा २॥ऽ' च. । एवममेऽपि । ९–'नः' ख. ग. झ.' 'नः । अथ' च. । १०–'ह्वयेतो' च.। ११–'वैतेनान्तरेत्य' इति क्वचित् । १२–'भव' ख. ग. च. झ. । १३–'तस्य विच्छेदार्थम्' ज. झ. । तस्याविच्छेदार्थमित्यपि क्वचित् ।

मानवी घृतपदीति । मनुर्ह्येतामग्रेऽजनयत तस्मादाह मानवीति घृतपदीति यदेवास्यै घृतं पदे समतिष्ठत तस्मादाह घृतपदीति॥२६॥

उत मैत्रावरुणीति । यदेव मित्रावरुणाभ्याᳪँ समगच्छत स ऽएव मैत्रावरुणो न्यङ्गो ब्रह्मा देवकृतोपहूतेति ब्रह्मा ह्येषां देवकृतोपहूतोपहूता दैव्या ऽअध्वर्युव ऽउपहूता मनुष्या ऽइति तद्दैवांश्चैवैतदध्वर्यूनुपह्वयते ये च मानुषा व्वत्सा वै दैव्या ऽअध्वर्यवोऽथ य ऽइतरे ते मानुषाः ॥ २७ ॥

य ऽइमं यज्ञमवान्ये च यज्ञपतिं व्वर्द्धानिति । एते वै यज्ञमवन्ति ये ब्राह्मणाः शुश्रुवाᳪँसोऽनूचाना ऽएते ह्येनं तन्वत ऽएत ऽएनं जनयन्ति तदु तेभ्यो निह्नुते व्वत्सा ऽउ वै यज्ञपतिं व्वर्द्धन्ति यस्य ह्येते भूयिष्ठा भवन्ति स हि यज्ञपतिर्व्वर्द्धते तस्मादाह ये च यज्ञपतिं व्वर्द्धानिति ॥ २८ ॥

---

अजामितायै । जामि ह कुर्याद्–यद्–'इडोपहूता इडोपहूता'–इत्येवोपह्वयेत उपहूतेडेति वा ॥ इडोपहूतेति–तदर्वाचीमुपह्वयते । उपहूतेडा–इति तत् पराचीम् । उपो अस्मानिडा ह्वयतामिति–तदात्मानञ्चैवैतन्नान्तरेति, अन्यथैव च भवति । इडोपहूतेति–तत् पुनरर्वाचीमुपह्वयते । तद् अर्वाचीञ्चैवैनामेतत् पराचीञ्चोपह्वयते ॥ **मानवी घृतपदी**–इति,–मनुर्ह्येतामग्रेऽजनयत तस्मादाह–'मानवी'–इति । घृतपदी–इति,–यदेवास्यै घृतं पदे समतिष्ठत, तस्मादाह 'घृतपदी'–इति ॥ उत **मैत्रावरुणी**–इति–यदेव मित्रावरुणाभ्यां समगच्छत । स एव मैत्रावरुणो न्यङ्गः । ब्रह्मा देवकृतोपहूतेति । ब्रह्मा ह्येषां देवकृतोपहूता । उपहूता दैव्या अध्वर्यवः, उपहूता मनुष्याः–इति । तद् दैवांश्चैवैतद् अध्वर्यूनुपह्वयते, ये च मानुषाः । वत्सा वै दैव्या अध्वर्यवः, अथ य इतरे–ते मानुषाः ॥ य **इमं यज्ञमवान्, ये च यज्ञपतिं वर्द्धान्**–इति,–एते वै यज्ञमवन्ति–ये ब्राह्मणाः शुश्रुवांसोऽनूचानाः । एते ह्येनं तन्वते, एत एनं जनयन्ति,–तदु तेभ्यो निह्नुते । वत्सा उ वै यज्ञपतिं वर्द्धन्ति–यस्य ह्येते भूयिष्ठा भवन्ति–स हि यज्ञपतिर्वर्द्धते । तस्मादाह–ये च यज्ञपतिं

---

दित्यभिप्रायः । इडां च भक्ष्यां भक्ष्यत्वेनानुज्ञाय भक्षयितॄननुजानीते–उपहूता दैव्या अध्वर्यव इत्यादिना ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

---

१–'ब्रह्मा' क. । २–'ह्येषा' च. । ३–'श्चैवाध्वर्यू' ख. ग. झ. । ४–'मानुषाः' ख. ग. झ. । ५–'व्वर्द्धते' च. । ६–'न्निति' ख. ग. झ. 'निति' च. ।

उपहूते द्यावापृथिवी पूर्वजे ऽऋतावरी देवी देवपुत्रे ऽइति । तदिमे द्यावापृथिवी ऽउपह्वयते ययोरिदꣳ सर्वमध्युपहूतोऽयं यजमान ऽइति तद्यजमानमुपह्वयते तद्यदत्र नाम न गृह्णाति परोऽक्षꣳ ह्यत्राशीर्यदिडायां मानुषꣳ ह कुर्याद्यन्नाम गृह्णीयाद् व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद् व्यृद्धं यज्ञे करवाणीति तस्मान्न नाम गृह्णाति ॥ २९ ॥

उत्तरस्यां देवयज्यायामुपहूत इति । तदस्मा ऽएतज्जीवातुमेव परोऽक्षमाशास्ते जीवन् हि पूर्वमिष्ट्वाथापरं यजते ॥ ३० ॥

तदस्मा ऽएतत् प्रजामेव परोऽक्षमाशास्ते । यस्य हि प्रजा भवत्यमुं लोकमात्मनैत्यथास्मिँल्लोके प्रजा यजते तस्मात् प्रजोत्तरा देवयज्या ॥ ३१ ॥

तदस्मा ऽएतत् पशूनेव परोऽक्षमाशास्ते । यस्य हि पशवो भवन्ति स पूर्वमिष्ट्वाथापरं यजते ॥ ३२ ॥

भूयसि हविष्करणे ऽउपहूत ऽइति । तदस्मा ऽएतज्जीवातुमेव परोऽक्षमाशास्ते जीवन् हि पूर्वमिष्ट्वाथ भूयोभूय ऽएव हविष्करोति ॥ ३३ ॥

---

वर्द्धानिति ॥ उपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे–इति । तदिमे द्यावापृथिवी उपह्वयते–ययोरिदं सर्वमधि । उपहूतोऽयं यजमानः इति, तद् यजमानमुपह्वयते । तद्यदत्र नाम न गृह्णाति–परोक्षं ह्यत्राशीः–यदिडायाम् । मानुषं ह कुर्याद्–यन्नाम गृह्णीयात् । व्यृद्धं वै तद्यज्ञस्य–यन्मानुषम्, नेद् व्यृद्धं यज्ञे करवाणि–इति । तस्मान्न नाम गृह्णाति ॥ उत्तरस्यां देवयज्यायामुपहूतः–इति, तदस्मा एतद् जीवातुमेव परोक्षमाशास्ते । जीवन् हि पूर्वमिष्ट्वाऽथापरं यजते ॥ तदस्मा एतत्प्रजामेव परोक्षमाशास्ते । यस्य हि प्रजा भवति–अमुं लोकमात्मनैति । अथास्मिन् लोके प्रजा यजते । तस्मात् प्रजोत्तरा देवयज्या ॥ तदस्मा एतत् पशूनेव परोक्षमाशास्ते । यस्य हि पशवो भवन्ति–स पूर्वमिष्ट्वाथापरं यजते ॥ भूयसि हविष्करण उपहूतः–इति, तदस्मा एतद् जीवातुमेव

---

तत्राप्यविशेषेणानुज्ञाय विशेषत आग्नीध्रमनुजानीते–उपहूते द्यावापृथिवी इति । स हि द्यावापृथिव्योरधिदैवरूपेणानुज्ञायते । उपहूतोयं यजमानः इति । यजमानस्य विशेषोपह्वानम्; परोक्षं ह्यत्राशीरिति । कथं परोक्षम्? उत्तरस्यां देवयज्यायामुपहूत–इत्यनुज्ञामात्रमिह श्रूयते, नाशास्त इति; 'यत्त्वाशास्यते, तदनुज्ञातव्यम्' इति अनुज्ञया आशीर्गम्यत इत्यभिप्रायः । ततश्च यजमानोऽपि सामान्यरूपेणैव–यजमान इति वाच्यः, न विशेषरूपेण–देवदत्तो, यज्ञदत्त इति । तद् विस्पष्टं प्रत्यक्षं मानुषमित्यभिप्रायः ॥ २९ ॥

उत्तरस्याम् । यदिडायामुपहूतः, तद् 'उत्तरस्यां देवयज्यायामुपहूतः' सा पीडाया एव विभूतिरित्य-

---

१–'त्वै' च. । २–नास्ति ख. ग. झ. । ३–'स्मिँलोके' ख. घ. झ. । ४–'यज्या' झ. । 'यज्याः' ग. । ५–'हवि-ष्करणा' क. । ६–नास्ति ख. ग. झ. । ७–भूयो-भूय एव' ख. ग. झ. ।

तदस्मा ऽएतत् प्रजामेव परोऽक्षमाशास्ते । यस्य हि प्रजा भवत्येक ऽआत्मना भवत्यथोत दशधा प्रजया हविष्क्रियते तस्मात् प्रजा भूयो हविष्करणम् ॥ ३४ ॥

तदस्मा ऽ[1]एतत् पशूनेव परोऽक्षमाशास्ते । यस्य हि पशवो भवन्ति स पूर्वमिष्ट्वाथ भूयो भूय ऽएव[2] हविष्करोति[3] ॥ ३५ ॥

एषा वा ऽआशीः[4] । जीवेयं प्रजा मे स्याच्छ्रियं गच्छेयमिति तद्यत्पशूनाशास्ते तच्छ्रियमाशास्ते श्रीर्हि पशवस्तदेताभ्यामेवैतदाशीर्भ्यां सर्वमाप्तं तस्माद्वा ऽएते ऽअत्र द्वे ऽआशिषौ क्रियेते॥३६॥

देवा म ऽइदꣳ हविर्जुषन्तामिति[5] । तस्मिन्नुपहूत ऽइति तद्यज्ञस्यैवैतत्[6] समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाह जुषन्तामिति ॥ ३७ ॥[7]

---

परोक्षमाशास्ते। जीवन् हि पूर्वमिष्ट्वाथ भूयोभूय एव हविष्करोति ॥ तदस्मा एतत्प्रजामेव परोक्षमाशास्ते। यस्य हि प्रजा भवति–एक आत्मना भवति,–अथोत दशधा प्रजया हविष्क्रियते । तस्मात्प्रजा भूयो हविष्करणम् ॥ तदस्मा एतत्पशूनेव परोक्षमाशास्ते । यस्य हि पशवो भवन्ति– स पूर्वमिष्ट्वाथ भूयो भूय एव हविष्करोति ॥ एषा वा आशीः–जीवेयम्, प्रजा मे स्यात्, श्रियं गच्छेयम्–इति। तद्यत्पशूनाशास्ते–तच्छ्रियमाशास्ते। श्रीर्हि पशवः। तदेताभ्यामेवैतदाशीर्भ्यां सर्वमाप्तम्। तस्माद् वा एते अत्र द्वे आशिषौ क्रियेते ॥ देवा म इदं हविर्जुषन्ताम्–इति। तस्मिन् उपहूतः–इति तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते। यद्धि देवा हविर्जुषन्ते–तेन हि

---

भिप्रायः । **तदस्मा एत**दिति । जीवनादीनामुत्तरेज्याहेतुत्वादुत्तरया देवेज्यया जीवनादीनि लक्ष्यन्ते–इति दर्शयति । यच्चाशास्यते तत्रोपह्वानं युक्तमिति गम्यमानामाशिषं 'परोक्षमाशास्ते' इति दर्शयति । एतेन 'भूयो हविष्करणम्' आशास्त इति व्याख्यातम् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

**एषा वा आशीः** । एषैव, नातोऽधिकास्तीत्यभिप्रायः । **तद्यत्पशू**निति । पशुग्रहणं श्रियुपलक्षणार्थमित्यभिप्रायः । **तदेताभ्या**मिति । यद्यपि जीवनादिलक्षणमेकमुभयत्राभिन्नम्, तथापि स्वरूपेणोत्तरस्या इज्याया बहु हविष्करणं भिद्यते; अल्पेनापि हविषा उत्तरस्या देवयज्याया[8] उपपत्तेः ॥ ३६ ॥

**देवा म इदं हविः** । 'देवा मे इदं हविः' 'जुषन्ताम्' सेवन्ताम् । यो मनोरथो यजमानस्य तस्य 'तस्मिन्' अयमनुज्ञातः, सोऽस्य समृद्ध्यतामित्यर्थः । **तद्यज्ञस्यैवैत**दिति । हविर्जोषणद्वारेण यज्ञसमृद्धिफलनाशास्त इति दर्शयति ॥ ३७ ॥

---

१–नास्ति ख. ग. झ. । २–'भूयो–भूय एव' ख. ग. झ. । ३–'हवि' च. । ४–'आशीः' ख. ग. झ. । ५–'विर्जुष' च. । ६–'स्यैवैतत्' क. च. । ७–इह 'शतम् ७०० ॥' इत्यधिकं ख. ग. झ. । ८–देवयज्यया–इति क्वचित् ।

तां वै[1] प्राश्नन्त्येव[2] । नाग्नौ जुह्वति पशवो वा ऽइडा नेत् पशूनग्नौ प्रवृणजामेति तस्मान्नाग्नौ जुह्वति ॥ ३८ ॥

प्राणेष्वेव हूयते । होतरि त्वद्यजमाने त्वदध्वर्य्यौ त्वदथ यत्पूर्वार्द्धं[3] पुरोडाशस्य प्रशीर्य पुरस्ताद् ध्रुवायै निदधाति यजमानो वै ध्रुवा तद्यजमानस्य प्राशितं भवत्यथ यत् प्रत्यक्षं न प्राश्नाति नेदमꣳस्थिते यज्ञे प्राश्नानीत्येतदेवास्य प्राशितं भवति सर्वे प्राश्नन्ति सर्वेषु मे हुतामसदिति पञ्च प्राश्नन्ति पशवो वा ऽइडा पाङ्क्ता वै पशवस्तस्मात् पञ्च प्राश्नन्ति[4] ॥ ३९ ॥

---

महज्जयति । तस्मादाह—जुषन्तामिति ॥ तां वै प्राश्नन्त्येव, नाग्नौ जुह्वति । पशवो वा इडा—नेत् पशूनग्नौ प्रवृणजाम इति । तस्मान्नाग्नौ जुह्वति ॥ प्राणेष्वेव हूयते—होतरि त्वद्, यजमाने त्वद्, अध्वर्यौ त्वद् । अथ यत्पूर्वार्द्धं पुरोडाशस्य- प्रशीर्य पुरस्ताद्ध्रुवायै निदधाति—यजमानो वै ध्रुवा, तद्यजमानस्य प्राशितं भवति । अथ यत्प्रत्यक्षं न प्राश्नाति—'नेदसंस्थिते यज्ञे प्राश्नानि' इति । एतदेवास्य प्राशितं भवति । सर्वे प्राश्नन्ति-सर्वेषु मे हुतामसदिति । पञ्च प्राश्नन्ति । पशवो वा इडा, पाङ्क्ता वै पशवः- तस्मात् पञ्च प्राश्नन्ति ॥

---

**तां वै प्राश्नन्त्येव** । प्रसन्ना ॥ ३८ ॥

**प्राणेष्वेव** । त्वच्छब्दः समुच्चयार्थः । होत्रादिग्रहणं प्रदर्शनार्थम्, ब्रह्माग्नीध्रयोरपि; "पञ्च प्राश्नन्ति"—इति वचनात् । **अथ यत्पूर्वार्द्धमि**ति । पुनर्वचनं यजमानभागत्वज्ञापनार्थम् । "**नेद-संस्थित** इति । नो संस्थिते; प्राश्नानीति वचनाद्गम्यते । 'अस्य' यजमानस्य 'प्राशितं भवति' इति । अग्नौ हुत्वाथ भक्षयति । "दैवो वा अस्यैष आत्मा मानुषोऽयम्"- इत्यनेन दर्शनेनास्य यजमानेन प्राशनीयमित्यभिप्रायः ॥ **अथ यत्प्रत्यक्षमि**ति । यजमानभागमनुपहूतं न प्राश्नाति; इडां तु विशेषत उपहूतां प्राश्नात्येव । **नेदसंस्थिते** इति । अद्यापि अनुयाजपत्नीसंयाजदेवता नेज्यन्ते; तास्वनिष्टास्वयुक्तं स्वयमशनमित्यभिप्रायः । **एतदेवास्ये**ति । होमानन्तरमेव प्राशितं भवतीत्यभिप्रायः । अन्ते तु प्रत्यक्षमेव प्राशिष्यति; अप्राश्यमाने यजमाने भागत्वव्यपदेशानुपपत्तेः । "सर्वे प्राश्नन्ति" इडामिति सम्बध्यते[5] ॥ ३९ ॥

---

१-'तांव्वै' च. । २-'प्राश्नन्त्येव' झ. । इदमिह पुरोडाशप्राशनमाग्नीध्रप्राशनञ्च संहितापाठे विपर्ययेणाम्नायते । संहितायां तु-(१) संज्योतिषा ज्योतिरिति स्रुचोर्ध्रुवया समञ्जनमन्त्रमाम्नाय (२) मयीदमिन्द्र इत्याशीर्मन्त्रः, तदनन्तरम्—(३) उपहूता पृथिवी—इति पुरोडाशप्राशनमन्त्रः, ततः—(४) देवस्य त्वा इत्यादिः प्राशित्रप्रतिग्रहप्राशनमन्त्र., ततः—(५)ध्रुवं ते इत्यादिर्ब्रह्मजपमन्त्रः, ततः-(६) एषा ते इति होत्रनुमन्त्रणमन्त्र आम्नायते । इत्थं कतिचित्प्रयोगेषु व्यत्यासो दृश्यते तथा स्रुचोर्ध्रुवया समञ्जनप्रयोगादूर्ध्वं येऽत्र शतपथे प्रयोगमन्त्रा आख्यातास्ते पुरोडाशप्राशनात् प्राचीनाः केऽपि संहितायां न दृश्यन्त इति संहिताशतपथयोः प्रयोगविभेदः। ३-'यत्पूर्वार्द्धं' च. ४-'प्राश्नन्ति' च.। ५-'ब्रह्माग्नीध्रयोरपि ग्रहणे पञ्चसंख्या संपन्नेतीहाधिकं' झ. ।

अथ यत्र प्रतिपद्यते । तच्चतुर्द्धा पुरोडाशं कृत्वा बर्हिषदं करोति तदत्र पितॄणां भाजनेन चेतस्रो वा ऽअवान्तरदिशोऽवान्तरदिशो वै पितरस्तस्माच्चतुर्द्धा पुरोडाशं कृत्वा बर्हिषदं करोति ॥ ४० ॥

अथ यत्राहोपहूते द्यावापृथिवी ऽइति । तदग्नीधँ आदधाति तदग्नीत् प्राश्नात्युपहूता पृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात् स्वाहोपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात् स्वाहेति द्यावापृथिव्यो वा ऽएष यदाग्नीध्रस्तस्मादेवं प्राश्नाति ॥ ४१ ॥

---

अथ यत्र प्रतिपद्यते—तच्चतुर्धा पुरोडाशं कृत्वा बर्हिषदं करोति । तदत्र पितॄणां भाजनेन । चतस्रो वा अवान्तरदिशः । अवान्तरादिशो वै पितरः । तस्माच्चतुर्धा पुरोडाशं कृत्वा बर्हिषदं करोति ॥ अथ यत्राह—'उपहूते द्यावापृथिवी' इति । तदग्नीध आदधाति, तदग्नीत् प्राश्नाति । **उपहूता पृथिवी माता, उप मां पृथिवी माता ह्वयताम्, अग्निराग्नीध्रात् स्वाहा** (वा० सं० २।१०) **उपहूतो द्यौः पिता, उप मां द्यौः पिता ह्वयताम्, अग्निराग्नीध्रात् स्वाहा** (वा० सं० २।११) इति । द्यावापृथिव्यो वा एष—यदाग्नीध्रः,

---

**अथ यत्र प्रतिपद्यते** । 'यत्र' काले होता 'प्रतिपद्यते' "इडोपहूता"—इत्येतं निगदम् 'तत्' तदा 'चतुर्द्धा कृत्वा पुरोडाशम्' आग्नेयम्; "आग्नेयं चतुर्द्धा करोति"—इति शाखान्तरात् । बर्हिषि सीदतीति 'बर्हिषत्' । यथा बर्हिषद् भवति, तथा करोति; बर्हिषि सादयतीत्यर्थः । ( तच्चतुर्द्धाकरणमाग्नेयस्य पुरोडाशस्य ब्रह्महोत्रध्वर्य्वग्नीधां भक्ष इति । एव चतुः प्रकारं चतुर्द्धा, अयजमानाश्चत्वारः प्राश्नन्तीत्येवं न पञ्च प्राश्नन्तीति विरोधः ) 'तत्' चतुर्द्धा कृतस्य बर्हिषः सादनम्, 'अत्र' दर्शपूर्णमासयोः 'पितॄणां भाजनेन हेतुना, क्रियत इति शेषः । पितॄणां संविभागार्थ इत्यर्थः । किन्तत् पितृभ्यो दीयते ? नेत्याह । किन्तर्हि ? चतुस्सङ्ख्यासामान्याद् बर्हिस्सम्बन्धाच्चात्र भक्तिमात्रमेतत् । तदाह—**चतस्रो वा** इति । **अवान्तरदिशो वै पितर** इति । तासु हि पितृयज्ञेन तेभ्यो दीयते । **तस्मादि**ति निगमः ॥ ४० ॥

**अथ यत्राहोपहूते** । 'तदग्नीध आदधाति' । आङ्पूर्वो दधातिरन्यत्र स्थापने प्रयुक्तोऽत्र त्वर्पणे द्रष्टव्यः । न चैष इडाभागः; किं तर्हि ? अन्य एवायमग्नीद्भागः; प्राशित्रञ्चेडा च, यच्चाग्नीध आदधातीतीडाया भेदेन व्यपदेशात् । एतेन ब्रह्मभागयजमानभागयोरपीडाव्यतिरेकः सिद्धः । 'द्यावापृथिव्यो वा एष यदाग्नीध्रः'। अग्निमिन्धे दीपयति सम्मार्गेणेति 'अग्नीत्' । अग्निसमिन्धनादियोगादाग्नीध्रस्य तत्परत्वम् । स इन्द्रः द्यावापृथिव्यौ तर्पयति । "धूमेनामूं वृष्ट्येमाम्"—( ऋ. सं. १।६४।९१ ) इति । धूमेन 'अमूं' द्याम्, वृष्ट्या 'इमां' पृथिवीमिति द्यावापृथिव्यौ आग्नीध्रः; तस्मिन् भक्षणादिना प्रीते सिद्धे, सिद्धा द्यावापृथिव्योः प्रीतिरिति ॥ ४१ ॥

---

१–'पितृणां' क. । २–'चतस्रो' ख. ग. च. झ. । ३–'ऽवान्तरदिशो' क. । ४–'कृत्वा' ख. ग. च. झ. । ५–'करोति' च. । ६–'द्यावा' ख. ग. च. झ. । ७–'ग्नीधऽआ' ख. ग. च. झ. । ८–बन्धनीभूतः पाठः क्वचिदेवोपलभ्यते ।

अथ यत्राशिषमाशास्ते । तज्जपति मयीदमिन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम् । अस्माकꣳ सन्त्वाशिषः सत्या नः सन्त्वाशिष ऽइत्याशिषामेवैष प्रतिग्रहस्तद्या ऽएवात्रऽर्त्विजो यजमानायाशिष ऽआशासते ता ऽएवैतत् प्रतिगृह्यात्मन् कुरुते॥४२॥

अथ पवित्रयोर्मार्जयन्ते । पाकयज्ञियेयेव वा ऽएतदिडयाचारिषुः पवित्रपूता यद्दत ऽऊर्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात् पवित्रयोर्मार्जयन्ते ॥ ४३ ॥

अथ ते पवित्रे प्रस्तरेऽपिसृजति । यजमानो वै प्रस्तरः प्राणोदानौ पवित्रे यजमाने तत् प्राणोदानौ दधाति तस्मात्ते पवित्रे प्रस्तरेऽपिसृजति ॥ ४४ ॥ ३ ॥

इति षष्ठप्रपाठके तृतीयं ब्राह्मणम् ॥ [८।१]

---

तस्मादेवं प्राश्नाति ॥ अथ यत्राशिषमाशास्ते–तज्जपति–'**मयीदमिन्द्र इन्द्रियं दधातु, अस्मान् रायो मघवानः सचन्ताम् । अस्माकं सन्त्वाशिषः, सत्या नः सन्त्वाशिषः**' ( वा० सं० २।१० ) इति । आशिषामेवैष प्रतिग्रहः । तद्या एवात्रर्त्विजो यजमानायाशिष आशासते–ता एवैतत्प्रतिगृह्यात्मन् कुरुते ॥ अथ पवित्रयोर्मार्जयन्ते । पाकयज्ञियेयेव वा एतदिडयाचारिषुः–पवित्रपूता–यद्दत ऊर्ध्वमसंस्थितं यज्ञस्य–तत्तनवामहा–इति । तस्मात्पवित्रयोर्मार्जयन्ते ॥ अथ ते पवित्रे प्रस्तरेऽपिसृजति । यजमानो वै प्रस्तरः, प्राणोदानौ पवित्रे; यजमाने तत् प्राणोदानौ दधाति । तस्मात्ते पवित्रे प्रस्तरेऽपिसृजति ॥

---

**अथ यत्राशिषम्** । 'यत्र' काले 'आशिषम्' ''उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायाम्'' इति होता 'आशास्ते', 'तत्' तदा जपति ( का. श्रौ. सू. ) । कः ? यजमानः, आशिषां तदर्थत्वात् । ''तद्या एवात्रर्त्विजो यजमानायाशिष आशासते, ता एवैतत् प्रतिगृह्यात्मन् कुरुते,–इतिवाक्यशेषात् ॥ ४२ ॥

**अथ पवित्रयोः** । 'पवित्रयोः' पवित्राभ्यामिति विभक्तिव्यत्ययः । कुतः ? 'पवित्रपूता यद्दत ऽऊर्ध्वमसंस्थितं यज्ञस्य तत्तनवामहै'–इति वाक्यशेषात् । मार्जयन्ते ''मृज् शौचालङ्कारयोः'' ( चुरा. उभ. ३१९ ) । चौरादिकत्वाण्णिच् । शोधयन्त्यात्मानमित्यर्थः ॥ ४३ ॥

**अथ ते पवित्रे** । 'यजमानो वै प्रस्तरः' इतरस्माद्बर्हिष उत्कृष्टतरत्वात् । 'प्राणोदानौ पवित्रे; द्वित्वात् । 'अपिसृजति' संसृजति ( का. श्रौ. सू. ) ॥ ४४ ॥ ३ ॥ [८।१]

[११]श्रीमतोऽवन्तिनाथस्य विक्रमार्कक्षितीशितुः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इत्याचार्य–श्रीहरिस्वामिनः कृतौ शतपथभाष्ये हविर्यज्ञेषु अष्टमाध्याये प्रथमं ब्राह्मणम् ।

---

१–'अथ' ख. ग. च. झ. । २–'इन्द्रियं' च. । ३–'सचन्तां अ–' ख. ग. झ. । ४–'एवं' क. । ५–'यज्ञिय' च. । ६–'ऊर्वं' ख ग. झ. । ७–'यज्ञस्य' च. । ८–'मार्जयन्ते' ख. ग. झ. । '–न्ते' च. । ९–'पवित्रे' च. । १०–नास्ति च. । एवमन्यत्रापि प्रायेण । ११–नास्ति श्लोकोऽयं ज ।

ते वा ऽएते ऽउल्मुके ऽउदूहन्ति। अनुयाजेभ्यो यातयामेव वा ऽएतदग्निर्भवति देवेभ्यो हि यज्ञमूहिवान् भवत्ययातयाम्न्यनुयाजां-स्तनवामहा ऽइति तस्माद्वा ऽएते ऽउल्मुके ऽउदूहन्ति ॥ १ ॥

ते पुनरनुसꣳस्पर्शयन्ति पुनरेवैतदग्निमाप्याययन्त्ययातयामानं कुर्वन्त्ययातयाम्नि यदुत ऽऊर्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात् पुनरनुसꣳस्पर्शयन्ति ॥ २ ॥

अथ समिधमभ्यादधाति। समिन्ध ऽएवैनमेतत् समिद्धे यदुत ऊर्ध्वमसꣳस्थितं यज्ञस्य तत् तनवामहा ऽइति तस्मात् समिधम-भ्यादधाति ॥ ३ ॥

ताꣳ होतानुमन्त्रयते। एषा ते ऽअग्ने समित्तया वर्द्धस्व चा च प्यायस्व वर्द्धिषीमहि च वय मा च प्यासिषीमहीति तद्यथैवाद: समिद्ध्यमानायान्वाहैवमेवैतदन्वाह तद्वेतद्धोतु: कर्म स यदि मन्येत न होता वेदेत्यपि स्वयमेव यजमानोऽनुमन्त्रयेत ॥ ४ ॥

---

अथानुयाजकर्म।

ते वा एते उल्मुके उदूहन्ति–अनुयाजेभ्य:। यातयामेव वा एतदग्निर्भवति–देवेभ्यो हि यज्ञमूहिवान् भवति; अयातयाम्न्यनुयाजांस्तनवामहै–इति। तस्माद्वा एते उल्मुके उदूहन्ति ॥ ते पुनरनुसंस्पर्शयन्ति, पुनरेवैतदग्निमाप्याययन्ति–अयातयामानं कुर्वन्ति; अयातयाम्नि यदुत ऊर्ध्वमसंस्थितं यज्ञस्य–तत्तनवामहै–इति। तस्मात् पुनरनुसंस्पर्शयन्ति ॥ अथ समिधमभ्यादधाति–समिन्ध एवैनमेतत्। समिद्धे–यदुत ऊर्ध्वमसंस्थितं यज्ञस्य–तत्तनवामहै–इति। तस्मात् समिधमभ्यादधाति। तां होता ऽनुमन्त्रयते–'एषा ते अग्ने

---

**ते वा एते उल्मुके**। अनुयाजब्राह्मणमेतत्। 'अथाग्निं कल्पयन्ति'–इत्यस्मिन् ( श. प. बा. ३।३।१२ ) क्रमे उल्मुके द्वे 'उदूहन्ति' ऊर्ध्वं नयन्ति–अग्नित: पृथक् कुर्वन्ति,–ऋत्विग्यजमाना:। साक्षादध्वर्यु:, इतरे तदनुज्ञानेन। अथ कस्मान्न बहव एव साक्षादुदूहन्ति? एकेनोदूहनेनैकस्यैव कर्त्तुरपेक्षितत्वात्। यथा चानुयाजयजने तेषां स्वव्यापारापेक्षं बहुत्वम्, एवमुदूहनेऽपीति गम्यते। किमर्थमुदूहन्ति? 'अनुयाजेभ्य:' अनुयाजार्थम्। कोऽनुयाजेषु तयोरुपयोग:? इति चेत्, 'यातयामा' गतरस:, गतवीर्य: 'एतत्' एतस्मिन्ननुयाजकाले अग्निर्भवति; 'देवेभ्य;' यस्माद् 'यज्ञमूढवान् भवति', ततश्च गतवीर्यत्वादनुयाजेष्वक्षम: स्यात्। आभ्यां प्रागुन्नीताभ्यां पुन: संसृष्टाभ्यां–अगतवीर्यो भविष्यतीत्यभिप्राय:। अत एवाग्निकल्पनकाले उदूहन्तीति गम्यते। अनुयाजेभ्य: उल्मुके उत्सार्य देवयागायाग्निं कल्पयन्तीति हि तत्र युज्यते ॥ १ ॥

**ते पुनरनु**। अनुयाजेभ्य उल्मुके उत्सार्य देवयागेऽतीते पश्चात् 'संस्पर्शयन्ति' सङ्गमयन्ति ॥ २ ॥

**अथ समिधमभ्या**। उल्मुकसमासेन पुनर्नवीकृतोऽग्नि: ॥ ३ ॥

**तां होता**। समिधा सामिधेनीस्थानीयया च "एषा ते"–इत्यनयर्चा (का. श्रौ. सू. ३

---

१–'याम्न्य' क.। २–'यन्तु' च.। ३–'समिन्द्ध' ख. ग. झ.। ४–'सामिध्य' ख. ग. झ.। ५–'येतु' च.। ६–'उल्मुक प्रज्वलत्काष्ठम्' इत्यमर:। ७–'यातयामो गतरस:—ज झ.। ८–कल्पयन्तीति–ज.। ९–यागे नीते–झ १०–प्रतीकमिदं नास्ति ज. झ. 'इत्यनयर्चा समिध्यन इत्यत्र च तृतीयकण्डिका समाप्ति: झ.। च.।

अथ सम्मार्ष्टि । युनक्त्येवैनमेतद्युक्तो यदत ऊर्ध्वमसꣳस्थितं यज्ञस्य तद्वहादिति तस्मात् सम्मार्ष्टि सकृत् सकृत् सम्मार्ष्टि त्रिस्त्रिर्वा ऽग्रे देवेभ्यः सम्मृजन्ति नेत्तथा करवाम यथा देवेभ्य ऽइति तस्मात् सकृत् सकृत् सम्मार्ष्ट्यजामितायै जामि ह कुर्याद्यत् त्रिः पूर्वं त्रिरपरं तस्मात् सकृत् सकृत् सम्मार्ष्टि ॥ ५ ॥

स सम्मार्ष्टि । अग्ने व्वाजजिद् वाजं त्वा ससृवाꣳसं वाजजितꣳ सम्मार्ज्मीति सरिष्यन्तमिति वा ऽग्र ऽआह सरिष्यन्निव हि तर्हि भवत्यथात्र ससृवाꣳसमिति ससृवेव ह्यत्र भवति तस्मादाह ससृवाꣳसमिति ॥ ६ ॥

अथानुयाजान् यजति । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञस्तायते सर्वा वै तत्ता ऽइष्टा भवन्ति तद्यत्तासु सर्वास्विष्टास्वथैतत्पश्चेवानुयजति तस्मादनुयाजा नाम ॥ ७ ॥

समित्–तया वर्द्धस्व चा च प्यायस्व, वर्द्धिषीमहि च वयमा च प्यासिषीमहि' ( वा० सं० २।१४ ) इति । तद्यथैवादः समिध्यमानायान्वाह–एवमेवैतदन्वाह । तदेतद्धोतुः कर्म । स यदि मन्येत 'न होता वेद' इति, अपि स्वयमेव यजमानोऽनुमन्त्रयेत ॥

अथ सम्मार्ष्टि–युनक्त्येवैनमेतद्, युक्तो यदत ऊर्ध्वमसंस्थितं यज्ञस्य–तद्वहाद्–इति । तस्मात् संमार्ष्टि । सकृत् सकृत् संमार्ष्टि । त्रिस्त्रिर्वा अग्रे देवेभ्यः संमृजन्ति, नेत्तथा करवाम–यथा देवेभ्यः–इति–तस्मात् सकृत् सकृत् संमार्ष्टि–अजामितायै । जामि ह कुर्याद्–यत् त्रिः पूर्वं त्रिरपरम् । तस्मात् सकृत् सकृत् संमार्ष्टि ॥ स संमार्ष्टि–अग्ने वाजजिद् वाजं त्वा ससृवांसं वाजजितं संमार्ज्मि ( वा० सं० २।१४ ) इति । सरिष्यन्तमिति वा अग्र आह–सरिष्यन् इव हि तर्हि भवति । अथात्र–ससृवांसम्–इति–ससृवेव ह्यत्र भवति । तस्मादाह ससृवांसमिति ॥

अथानुयाजान् यजति । या वा एतेन यज्ञेन देवता ह्वयति–याभ्य एष यज्ञस्तायते, सर्वा वै तत्ता इष्टा भवन्ति । तद् यत्तासु सर्वासु इष्टासु अथैतत् पश्चेवानुयजति, तस्मादनु-

"समिध्यते"–इत्येतदादिभ्यां द्वाभ्यामाह । **तदेतदिति** । यस्मादेवमनुमन्त्रणात्मकं कर्म होतुः, नाध्वर्योः । 'स यजमानः' 'होता न वेद इति मन्येत', तदा स्वयमप्यनुमन्त्रयेत ॥ ४ ॥

**अथ सम्मार्ष्टि** । सम्मार्गो द्वाभ्यामुच्यते ( का. श्रौ. सू. ३ ) ॥ ५ ॥

**स सम्मार्ष्टि** । 'ससृवान्' ससृतवानिति प्राप्ते तकारलोपः ॥ ६ ॥

**अथानुयाजान्** । अत्रानुयाजविधिरुपक्रान्तः, तस्मात् "अनुयाजान यजति"–इत्युपसंहरिष्यते । 'या वा एतेन'–इति निर्वचनम् ॥ ७ ॥

१–'संमार्ष्टि' झ. । एवमग्रेऽपि। २–'त्रिस्त्रिर्वा' च । ३–समार्ष्टि' च. । ४–'तर्हि' ख, ग. झ. । ५–'भवति' च. । ६–'मिति' ख. ग. झ. 'मिति' च. । ७–'नाम ख. ग. झ. । 'नाम' च. । ८–नास्त्येतच्चतुर्थकण्डिकाव्याख्यानं ज. । ९–इह पूर्वं 'न चैष इडाभागः, किं तर्ह्यन्य एवायमग्नीद्भागः–प्राशित्रं च इडा च यच्चाग्नीध आदध्यात्' इति पूर्वतनः पाठः पुनः कश्चित्क्रमेण धृतः क. ।

अथ यदनुयाजान् यजति । छन्दाᳬंसि वा ऽअनुयाजाः पशवो वै देवानां छन्दाᳬंसि तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दाᳬंसि युक्तानि देवेभ्यो यज्ञं व्वहन्ति[1] तद्यत्र छन्दाᳬंसि देवान्त्समतर्पयन्नथ[2] छन्दाᳬंसि देवाः समतर्पयंस्तदतस्तत् प्रागभूद्यच्छन्दाᳬंसि युक्तानि देवेभ्यो यज्ञमवाक्षुर्यदेनान्त्समतीतृपन् ॥ ८ ॥

अथ यदनुयाजान् यजति । छन्दाᳬंसि वा ऽअनुयाजाश्छन्दाᳬंस्येवैतत्सन्तर्प्पयति[3] तस्मादनुयाजान्यजति तस्माद्येन व्वाहनेन धावयेत्तद्विमुच्य ब्रूयात् पाययतैनत्[4]सुहितं कुरुतेत्येष ऽउ वाहन[5]स्यापह्नवः[6] ॥ ९ ॥

स वै खलु बर्हिः प्रथमं यजति । तद्वै कनिष्ठं छन्दः सद्गायत्री प्रथमा छन्दसां युज्यते तदु तद्वीर्येणैव यच्छ्येनो[7] भूत्वा[8] दिवः सोममाहरत्तदयथायथं मन्यन्ते यत्कनिष्ठं छन्दः सद्गायत्री प्रथमा छन्दसां युज्यते[9]ऽथात्र यथायथं देवाश्छन्दाᳬंस्यकल्पयन्ननुयाजेषु नेत्पापवस्यसमसदिति[10] ॥ १० ॥

याजा नाम ॥ अथ यदनुयाजान् यजति,–छन्दांसि वा अनुयाजाः, पशवो वै देवानां छन्दांसि । तद् यथेदं पशवो युक्ता मनुष्येभ्यो वहन्ति–एवं छन्दांसि युक्तानि देवेभ्यो यज्ञं वहन्ति । तद् यत्र छन्दांसि देवान् समतर्पयन्, अथ छन्दांसि देवाः समतर्पयन् । तदतस्तत् प्रागभूत्–यच्छन्दांसि युक्तानि देवेभ्यो यज्ञमवाक्षुः–यदेनान् समतीतृपन् ॥ अथ यदनुयाजान् यजति–छन्दांसि वा अनुयाजाः, छन्दांस्येवैतत् संतर्पयति–तस्मादनुयाजान् यजति । तस्माद् येन वाहनेन धावयेत्–तद्विमुच्य ब्रूयात्–'पाययतैनत्, सुहितं कुरुत' इति । एष उ वाहनस्यापह्नवः ॥

स वै खलु बर्हिः प्रथमं यजति । तद्वै कनिष्ठं छन्दः सद् गायत्री प्रथमा छन्दसां

**अथ यदनुयाजान्** ।–इति अर्थवादसम्बन्धार्थः पुनरुपन्यासः । **छन्दाᳬंसीति** । यदा छन्दोभिर्देवास्तर्पिताः, अथोत्तरकालं देवैश्छन्दांसि, तर्पितानीतीतिहासः । तमधियज्ञं योजयति–'तद्' 'अतः' अनुयाजेभ्यः 'प्राग्' वृत्तमधियज्ञम् । किं तत् ? यच्छन्दोभिर्देवास्तर्पितास्तस्यैतद्यज्ञे रूपं दर्शितम् । प्रयाजादौ स्विष्टकृदन्त इत्यर्थः ॥ ८ ॥

यैस्तु द्वितीयो वृत्तान्तो देवैश्छन्दसां तर्पणम्, स यज्ञे दर्शनीयः; तदर्थमनुयाजा इज्यन्त इति दर्शयन्नाह–**अथ यदनुयाजान् यजती**ति ॥ ९ ॥

**स वै खलु** । उत्तरस्यां कण्डिकायां बर्हिषो जगतीत्वं वक्ष्यते, अस्यां तु जगत्या अनुयाजेषु प्राथम्यकारणमाह–**तद्वै** इति । तत्र सामिधेनीषु 'कनिष्ठम्' अक्षरसङ्ख्ययाऽल्पतमं 'छन्दः' 'गायत्री'

१–'व्वृहन्ति' च. । २–'तर्प्प' ग. एवमग्रे । ३–'त्सुन्त' ख. ग. च. झ. । ४–'पायय' ख. ग. झ. । ५–'व्वाहन' च. । ६–'ह्नवः' ख. ग. झ. । ७–'युच्छेनो' क. । ८–'भूत्वा' ख. ग. झ. । ९–'युज्यते' ख. ग. झ. । १०–'सदिति' ख. ग. च. झ. । ११–यस्य द्वितीयावृत्तं देवैश्छन्दसां–इत्यादि क. ।

स वै खलु बर्हिः प्रथमं यजति । अयं वै[1] लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक[2] ऽओषधीर्दधाति ता ऽइमा ऽअस्मिंल्लोक ऽओषधयः प्रतिष्ठितास्[3]तदिदꣳ सर्वं[4] जगदस्यां तेनेयं जगती तज्जगतीं प्रथमामकुर्व्वन् ॥ ११ ॥

अथ नराशꣳसं द्वितीयं यजति । अन्तरिक्षं व्वै नराशꣳसः प्रजा वै नरस्ता इमा अन्तरिक्षमनु वावद्यमानाः प्रजाश्चरन्ति यद्वै व्वदति शꣳसतीति वै तदाहुस्तस्मादन्तरिक्षं नराशꣳसोऽन्तरिक्षमु वै त्रिष्टुप्[6] तत् त्रिष्टुभं द्वितीयामकुर्व्वन् ॥ १२ ॥

युज्यते । तदु तद् वीर्येणैव—यत् श्येनो भूत्वा दिवः सोममाहरत् । तद् अयथायथं मन्यन्ते यत्कनिष्ठं छन्दः सद् गायत्री प्रथमा छन्दसां युज्यते । अथात्र यथायथं देवाश्छन्दांस्यकल्पयन्—अनुयाजेषु; नेत् पापवस्यसम् असद्—इति ॥

स वै खलु बर्हिः प्रथमं यजति । अयं वै लोको बर्हिः, ओषधयो बर्हिः; अस्मिन्नेवैतल्लोके ओषधीर्दधाति । ता इमा अस्मिन् लोके ओषधयः प्रतिष्ठिताः, तदिदं सर्वं जगदस्याम् । तेनेयं जगती । तज्जगतीं प्रथमामकुर्वन् ॥ अथ नराशंसं द्वितीयं यजति ।

'प्रथमा छन्दसां' यज्ञेषु 'युज्यते' । 'तत्' तेन 'वीर्येण' 'यच्छ्येनो भूत्वा दिवः सोममाहरत्' । यच्च
'अयथायथं' अयथास्थं स्थानविपर्यासं 'मन्यन्ते' विद्वांसः । 'यद्' जगत्यां परिमाणतो ज्येष्ठायामेव
तिष्ठमानायामल्पाक्षरा 'गायत्री प्रथमा युज्यते', तद् 'यथायथं' कर्तुमिह 'अनुयाजेषु' 'देवाः' जगतीं
प्रथमाम् 'अकल्पयन्' । सा च जगती बर्हिरित्यभिप्रायः । किमर्थम् ? 'नेन् पापवस्यसमसत्' 'पापं'
ज्येष्ठापेक्षया कनिष्ठम्, तत् पापमेव, 'वस्यसम्' प्रशस्यतरम्, यत् 'नेत्—असत्'; तदनुकाराच्च प्रजा-
स्वपि यत्पापं वित्तबन्धुकर्मादिना, तद् 'वस्यसम्' वसुतर, प्रशस्यतरमितरस्मादपापान्माभूदिति ॥ १० ॥

यदि देवा यथायथमत्राकल्पयन्, एव तर्हि जगती प्रथमं यष्टव्या, किम् बर्हिषा? एतदाशङ्क्य बर्हिषो जगतीत्वं वक्तु बर्हिःशब्दप्रयोगे च कारण वक्तु पुनराह—**स वै खलु** इति । 'अयं वै लोको बर्हिः' येयं बर्हिराख्या देवतात्रेज्यते, एषा अय लोकः । कथम् ? । परिवृद्धो हि सः । एवमपि जगती-शब्देनैव युक्तम्, 'अयं लोको'[11] 'बर्हिः' यष्टुम्, किं बर्हिः—शब्देन? अत आह—**ओषधयो बर्हिरस्मिन्नेवैतल्लोक ओषधीर्दधाती**ति । बर्हिः—शब्देन जगत्यामपीज्यमानायामयं गुणो लभ्यत इत्यभिप्रायः । यद्ययं लोको 'बर्हिः', बर्हिश्च प्रथममिज्यते, ततः कथं यथायथ छन्दांसि कल्पितानि भवन्तीत्यत आह- **तदिदमि**ति । अयमेव लोको जगत्सम्बन्धाद् 'जगती'; ततश्चास्मिन् लोके बर्हिषीज्यमाने जगती छन्दसां प्रथममिष्टा भवतीत्ययथायथपरिहारः । **तज्जगतीं प्रथमामि**ति । "यद्बर्हिः प्रथममयजन् देवाः, तज्जगतीं प्रथमामकुर्वंस्तेन यथायथमकुर्वन्"—इतीतिहासशेषस्य पूर्वेण सम्बन्धः। 'तथो एवैष यद्बर्हिर्यजति, तज्जगतीं प्रथमां करोति। ततश्चापापवस्यसं यथायथं करोति'—इति चोपसंहार इतिहासस्य द्रष्टव्य ॥ ११ ॥

**अथ नराशंसम्** । नरः प्रजाः शंसन्ति वदन्त्यस्मिन्निति 'अन्तरिक्षं नराशंसः' । 'अन्तरिक्षमु वै

१–'व्वै' च. । २–अस्मिल्लोक' क. । 'अस्मिंलोक' झ. । ३–प्रतिष्ठिता' च. । ४–सर्व्वं' च. । ५–'शुं॒ स २
द्वि' क. । ६–'त्रिष्टुप्तत्' ख. ग. च. झ. । ७–तच्च–ज. । ८–तस्माद्–ज. । ९.–'पापमेव सद् वस्यः–प्रशस्यतरम्–
यज्ञे नेदमसत्–ज. झ. । १० तद्वस्यः–ज. झ. । ११ अय लोको यष्टु–ज. ।

अथाग्निरुत्तमः । गायत्री वा अग्निस्तद्गायत्रीमुत्तमामकुर्व्वन्नेवं यथायथेन क्लृप्तेन छन्दाᳬसि प्रत्यतिष्ठंस्तस्मादिदमपापवस्यसम् ॥ १३ ॥

देवान् यजेत्येवाध्वर्युराह । देवंदेवमिति सर्वेषु होता देवानां वै देवाः सन्ति छन्दाᳬस्येव पशवो ह्येषां गृहा हि पशवः प्रतिष्ठो हि गृहाश्छन्दाᳬसि वा ऽअनुयाजास्तस्माद् देवान् यजेत्येवाध्वर्युराह देवंदेवमिति सर्वेषु होता ॥ १४ ॥

---

अन्तरिक्षं वै नराशंसः, प्रजा वै नरः—ता इमा अन्तरिक्षमनु वावद्यमानाः प्रजाश्चरन्ति, यद्वै वदति—शंसतीति वै तदाहुः । तस्मादन्तरिक्षं नराशंसः । अन्तरिक्षमु वै त्रिष्टुप्—तत् त्रिष्टुभं द्वितीयामकुर्वन् ॥ अथाग्निरुत्तमः । गायत्री वा अग्निः, तद्गायत्रीमुत्तमामकुर्वन् । एवं यथायथेन क्लृप्तेन छन्दांसि प्रत्यतिष्ठन्, तस्मादिदमपापवस्यसम् ॥ 'देवान् यज' इत्येवाध्वर्युराह, देवं देवमिति सर्वेषु होता । देवानां वै देवाः सन्ति छन्दांस्येव—पशवो ह्येषाम् । गृहा हि पशवः, प्रतिष्ठो हि गृहाः; छन्दांसि वा अनुयाजाः । तस्माद्—देवान् यजेत्येवा-

---

त्रिष्टुप्'; मध्यमत्वादेकादशभागत्वाच्च । दश दिशः, आत्मनैकादश । रुद्रसम्बन्धाद्वा—इहापि तथैवेतिहासोऽधियज्ञे उपसंहारार्थः । 'यन्नराशंसमयजन्, तत् त्रिष्टुभं द्वितीयामकुर्वन्; यन्नराशंसं यजति, तत् त्रिष्टुभं द्वितीयां करोति'—इति ॥ १२ ॥

**अथाग्निरुत्तमः** । अत्र यष्टव्य इति शेषः । 'गायत्री वा अग्निः' आग्नेयी हि ॥ १३ ॥

**देवान् यजेत्येव** । बर्हिरादिषु यष्टव्येषु बर्हिर्यजेत्यादिरूपेन्द्रयाज्यावचने चेदमुच्यते । 'देवान्'—इति बहुवचनान्तेन देवशब्देनाध्वर्युः प्रेष्यति; न बर्हिर्यजेत्यादिना । होतापि सर्वत्र 'देवंदेवमिति' आह, न बर्हिरादेव केवलमित्यर्थः ।

ननु चोत्तरयोर्देवो देव इत्याह, न देवं देवमिति ? सत्यमेवम् । यथा प्राप्ते त्वनुवदितव्ये देवशब्दाद्वीप्साद्विर्वचनमेतत् प्रातिपदिकनिर्देशमात्रपरं द्रष्टव्यम् । किं पुनः कारणं बर्हिरादिषु वक्तव्येषु देवान् आह ? यस्माच्छन्दो देवत्या अनुयाजाः, 'छन्दांसि' च 'देवानां देवाः', परोक्षत्वाच्च देवशब्दः प्रशस्ततरः । अतः छन्दो वा गायत्र्यादिर्वा, तस्माद् देवान् यजेत्येवाध्वर्युराह—इत्येतमर्थं **'देवानां वै देवाः सन्ति'**—इत्यादिना दर्शयति । 'पशवो हि' इति देवत्वोपपत्तिः । पशूनाञ्च साक्षाद्देवत्वमसिद्धमिति 'गृहा हि पशवः' इत्याह । गृहभोगाः पशुमन्त एवेति 'गृहाः' पशवः । गृहाणामप्यसिद्धं देवत्वमिति 'प्रतिष्ठो हि गृहाः'—इत्याह । प्रतितिष्ठन्त्यस्यामिति 'प्रतिष्ठा' शरणम्, गतिरित्यर्थः । यश्च यस्य शरणं गतिरत्यन्तोपकारी, स तस्य देव इति प्रसिद्धम् । "**तस्माद् देवान् यजेत्याह**"—इत्युपसंहारः ॥ १४ ॥

---

१—'रुत्तमः' **ख. ग. झ.** । २—'देवं—देवमिति' **ख. ग. झ.** । ३—'सर्व्वेषु' **च** एवं सर्वत्रैव प्रायेण । ४—'र्व्वे' **च** एवमन्यत्रापि । ५—नास्ति **क.** । ६—आलोकात्मनैका—दश **ज.** । ७—एकादश हि रुद्रा मध्यमस्थानाश्चेत्य-भिहितं निरुक्तादौ, तत्सम्बन्धात्तच्छन्दसेऽन्तरिक्षत्वमभिहितमित्याशयः । ८—अग्निच्छन्दो गायत्र्येवात्राग्निपदेनोक्तेति भावः । ९—'बर्हिर्यजेत्यादिना होतापि सर्वत्र देव देवमित्याह—इत्येतावन्मात्रम् **ज झ.** । १०—पशुमन्त इति तु क्वाचित्कोऽपपाठ एवाभाति ।

व्वसुवने व्वसुधेयस्येति । देवताया ऽएव व्वषट् क्रियते देवतायै हूयते न वा ऽअत्र देवतास्त्यनुयाजेषु देवंम्बर्हिरिति तत्र नाग्निर्नेन्द्रो न सोमो देवो नराशंस ऽइति नात ऽएकंश्चन यो वा ऽअत्राग्निर्गायत्री स निदानेन ॥ १५ ॥

अथ यद्वसुवने व्वसुधेयस्येति यजति । अग्निर्वै व्वसुवनिरिन्द्रो वसुधेयोऽस्ति वै छन्दसां देवतेन्द्राग्नी ऽएवैवमु हैतद्देवताया ऽएव व्वषट् क्रियते देवतायै हूयते ॥ १६ ॥

---

ध्वर्युराह, देवं देवमिति सर्वेषु होता ॥ वसुवने वसुधेयस्येति–देवताया एव वषट् क्रियते, देवतायै हूयते । न वा अत्र देवतास्ति–अनुयाजेषु–देवं बर्हिः–इति । तत्र नाग्निः, नेन्द्रः, न सोमो देवो नराशंस इति । नात एकंचन । यो वा अत्राग्निः–गायत्री स निदानेन ॥ अथ यद् 'वसुवने' 'वसुधेयस्य' इति यजति । अग्निर्वै वसुवनिः, इन्द्रो वसुधेयः। अस्ति वै छन्दसां देवता इन्द्राग्नी एव । एवमु हैतद् देवताया एव वषट्क्रियते, देवतायै

वसुवने वसुधेयस्येति । अनुयाजेषु सर्वेषु होताहेति सम्बन्धः । देवताया एवेति । कण्डिकाद्वयेनास्य पदद्वयस्यान्तरार्थव्याख्यानम् । तस्योपक्रमः–सर्वत्रैव यागे देवताया एव होत्रा 'वषट् क्रियते' । 'देवतायै' एवाध्वर्युणा 'हूयते' । एतदुचितम् । 'अत्र' तु 'अनुयाजेषु' प्रसिद्धा 'देवता' 'न अस्ति,' बर्हिर्नराशंसयोर्देवतात्वेनाप्रसिद्धेः, अग्नेश्च गायत्रीप्रधानत्वात् । तेन 'वसुवने' 'वसुधेयस्य'–इति शब्दाभ्यामग्निमिन्द्रञ्चोपादाय, ताभ्यां बर्हिरादीनुपलक्ष्य इन्द्राग्न्यात्मकेभ्यो बर्हिरादिभ्यो वषट् करोति होता, अध्वर्युश्च तदात्मकेभ्य एव जुहोतीत्युपसंहारः ॥ १५ ॥

अथ यद् । अग्निर्वै वसुवनिः । वसु हविर्लक्षणं वनति भजति, इतरद्वा यजमानेभ्यो ददद्भजतीति 'वसुवनिः' । 'इन्द्रो वसुधेयः' । वसूनि हवींषि धीयन्तेऽस्मिन्निति 'वसुधेयः', वसूनि वा दधाति ददातीति वा 'वसुधेयः' । "कृत्यल्युटो बहुलम्"– पा. सू. ३. ३. ११३ इति कर्तर्यधिकरणे वा कृत्यः । ततः किम् ? देवतायै वषट् क्रियत इत्यभिप्रायः । ननु चात्र जगत्यादिभ्यश्छन्दोभ्यो बर्हिरादिशब्दकेभ्यो वषट् कर्तव्यमिन्द्राग्न्योः किमापतितम् ? नैष दोषः । इन्द्राग्निभ्यां प्रसिद्धदेवतारूपप्रतिपत्तये जगत्यादीन्येव लक्षयिष्यन्ते, यथा बर्हिरादिभिः । कथ पुनरिन्द्राग्निभ्यां जगत्यादीनि लक्ष्यन्तेऽसम्बद्धाभ्यामित्यत आह–अस्ति वै छन्दसामिति । प्राणेनेन्द्रेणाधिष्ठितया वाचा छन्दांस्यभिव्यज्यन्त इति 'इन्द्राग्नी एव देवता छन्दसाम्' । ततश्चाधिष्ठात्र्या देवतया शक्यान्यात्मरूपापन्नानि जगत्यादीनि लक्षयितुम् । एवमपि 'वसुवने' इत्यामन्त्रितान्तम्, 'वसुधेयस्य'–इति षष्ठ्यन्तम्; ते

---

१–'देवं' ख. ग. च. झ. । २–'नेन्द्रो' ख. ग. झ. । ३–'एकं चन' ख ग. च. झ. । ४–'र्गायत्री' च. । ५–'स' च. । ६–'निदानेन' ग. झ. 'निदानेन' च. । ७–'व्वसु' च. । ८–'धेयो' ख. ग च. झ. । ९–'ताया एव' क. । १०–पदमिदं नास्ति ज. । ११–ततः किम् ? एवं वै देवतायै–ज. ।

अथोत्तममनुयाजमिष्ट्वा समानीय जुहोति प्रयाजानुयाजा वा ऽएते तद्यथैवादः प्रयाजेषु यजमानाय द्विषन्तं भ्रातृव्यं बलिᳬ हारयत्यत्र ऽआद्यं बलिᳬ हारयत्येवमेवैतदनुयाजेषु बलिᳬ हारयति॥ १७॥४॥
इति षष्ठप्रपाठके चतुर्थं ब्राह्मणम् । [ ८ । २ ] ॥ षष्ठः प्रपाठकः ।[3]

---

हूयते ॥ अथोत्तममनुयाजमिष्ट्वा समानीय जुहोति । प्रयाजानुयाजा वा एते, तद्यथैवादः प्रयाजेषु यजमानाय द्विषन्तं भ्रातृव्यं बलिं हारयति—अत्र ऽ आद्यं बलिं हारयति—एवमेवै-तदनुयाजेषु बलिं हारयति ॥

---

कथम् 'बर्हिर्वेतु'—इति प्रथमान्तेन बर्हिरादिना सम्बद्ध्येते? नैष दोषः । एव मु हैतदिति । ध्रुवं द्वे अप्येते विभक्ती व्यत्ययेन ( पा. सू. ३।१।८५ ) चतुर्थ्यर्थवृत्ते दर्शयति । तथापि च नैव सामानाधि-करण्येन सम्बन्धः । कथं तर्हि? बर्हिर्वेतु वसुवनि—वसुधेयाभ्यां वौषडिति बर्हिरात्मिका जगती पिबत्वा-ज्यम्,—तस्यै एवेन्द्राग्निरूपायै वषडित्यर्थः । ननु चात्र याज्यायामुपपद्येताप्ययमर्थः, प्रैषे तु वषट्कार एव नास्ति—"देवं बर्हिः ०—० वसुवने वसुधेयस्य यज" ( का. श्रौ. सू. ) इति, तत्र कथमेकवाक्यता स्यात्? नैष दोषः; तस्यापि हि यास्काचार्येण "वसुवननाय च वसुधानाय च ( निरु. ९. ४. १० )"—इति तादर्थ्यचतुर्थ्या एकवाक्यता दर्शिता । अथवा विनैव विभक्तिव्यत्ययादर्थो वक्तव्यः । हे भगवन्! 'वसुवने' अग्ने! छन्दसो देवतां त्वदात्मकं त्वदनुगृहीतमेतद् देवं बर्हिः शब्दकं छन्दः 'वसुधेयस्य' इन्द्रस्य स्वरूपमधिष्ठाय 'वेतु' इति । एवमपि चेन्द्राग्निसम्बन्धकीर्तनमात्रादेव देवतायै वषट् क्रियत इत्यभिप्रायः ।—एवं तावदन्तरोऽर्थः । हे 'वसुवने' अग्ने! वसुधेयस्य प्रशस्यस्याज्यभागस्य 'वेतु' 'देवं बर्हिः'—इति बाह्योऽर्थः ॥ १६ ॥

अथोत्तमम् । प्रयाजानुयाजा वा एत इति ।[4] प्राणादनपेतः 'प्रयाजः' अपानादनपेतः 'अनु-याजः' । इति "प्राणा वै प्रयाजा अपाना अनुयाजाः" ( निरु. ८।३।७ ) इति प्राणापाननिवृत्तौ समानयनेन भवितव्यमित्यभिप्रायः ॥ १७ ॥ ४ ॥ [ ८।२ ]

श्रीमतोऽवन्तिनाथस्य विक्रमादित्यभूपतेः ।[5][6]
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथश्रुतिम् ॥[7]

इत्याचार्यश्रीहरिस्वामिनः कृतौ शतपथब्राह्मणभाष्ये हविर्यज्ञेषु अष्टमाध्यायस्य द्वितीयं ब्राह्मणम्

इति षष्ठप्रपाठकः समाप्तः ।

---

१–तद्यथैवादः' क. । २ –'त्यत्र' च. झ. । ३–इहाग्रे 'कण्डिकासंख्या १११' इत्यधिकः पाठः ख. ग..च. झ. । ४–प्राणापाना एत इति सूचयति । तैश्च सदृशैरेव भवितव्यमित्यभिप्रायः–इत्येतावन्मात्रमेतत्कण्डिकाव्याख्यानं ज. । ५–नास्ति श्लोकोऽयं ज. । ६–विक्रमार्कस्य भूपतेः–विक्रमस्य क्षितीशितुरेति वा पाठौ । ७–च्छातपथीं श्रुतिमिति क्वचित् ।

# अथ प्रथमकाण्डे सप्तमप्रपाठके प्रथमं ब्राह्मणम्।



स वै स्रुचौ व्यूहति। अग्नीषोमयोरुज्जितिमनूज्जेषं व्वाजस्य मा प्रसवेन प्रोहामीति जुहूं प्राचीं दक्षिणेन पाणिनाग्नीषोमौ तमपनुदतां योऽस्मान् द्वेष्टि यं च व्वयं द्विष्मो व्वाजस्यैनं प्रसवेनापोहामीत्युपभृतं प्रतीचीᳯं सव्येन पाणिना यदि स्वयं यजमानः॥ १॥

यद्यु ऽअध्वर्युः अग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो व्वाजस्यैनं प्रसवेन प्रोहाम्यग्नीषोमौ तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि व्वाजस्यैनं प्रसवेनापोहामीति पौर्णमास्यामग्नीषोमीयᳯं हि पौर्णमासᳯं हविर्भवति॥ २॥

अथामावास्यायाम्। इन्द्राग्न्योरुज्जितिमनूज्जेषं व्वाजस्य मा प्रसवेन प्रोहामीन्द्राग्नी तमपनुदतां योऽस्मान् द्वेष्टि यं च वयं द्विष्मो व्वाजस्यैनं प्रसवेनापोहामीति यदि स्वयं यजमानः॥ ३॥

---

सूक्तवाक-शंयुवाक-कर्मारम्भः।

स वै स्रुचौ व्यूहति-'अग्नीषोमयोरुज्जितिमनूज्जेषम्, वाजस्य मा प्रसवेन प्रोहामि' (वा.सं.२।१५) इति-जुहूं प्राचीं दक्षिणेन पाणिना। 'अग्नीषोमौ तमपनुदताम्-योऽस्मान द्वेष्टि, यं च वयं द्विष्मो, वाजस्यैनं प्रसवेनापोहामि' (वा.सं.२।१५) इति-उपभृतं प्रतीचीं सव्येन पाणिना-यदि स्वयं यजमानः॥ यद्यु अध्वर्युः-'अग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो, वाजस्यैनं प्रसवेन प्रोहामि' अग्नीषोमौ तमपनुदताम्-यमयं यजमानो द्वेष्टि, यश्चैनं द्वेष्टि, वाजस्यैनं प्रसवेनापोहामि-इति पौर्णमास्याम्। अग्नीषोमीयं हि पौर्णमासं हविर्भवति॥ अथामावास्यायाम्। इन्द्राग्न्योरुज्जितिमनूज्जेषम्, वाजस्य मा प्रसवेन प्रोहामि। इन्द्राग्नी-

---

**स वै स्रुचौ व्यूहति** (का. श्रौ. सू. ३।११७)। 'ऊह-वितर्के' (भ्वा. आ. ६४९), प्रेरणं त्वत्र द्रष्टव्यः। अन्योऽन्यविपरीतं 'नामयतीत्युपन्यासमधिकर्तुं व्यूहनस्य प्रेरकताद्यनेकगुणश्रुतेस्त्वन्तावेव विधी मन्तव्यौ। **अग्नीषोमयोरि**ति (का. श्रौ. सू. ३।११७)। लिङ्गक्रमाभ्यांप्राप्तमन्त्रानुवादः। 'जुहूं प्राचीं दक्षिणेन पाणिना' व्यूहतीत्यनुवर्तते। एष तावदेको विधिः, अपरोऽपि-'**उपभृतं प्रतीचीं सव्येन पाणिना**' इति (का; श्रौ. सू. ३।११७)। 'यदि स्वयं यजमानः'-इति, लिङ्गात् प्राप्तस्य यजमानस्यानुवादः॥१॥

एवमेव 'यद्यु अध्वर्युः'-इति (का. श्रौ. सू. ३।११९) मन्त्रोत्पत्तिपरोऽध्वर्योरनुवादः। अनुवादे च सति यदि कालवचनः, पौर्णमासीशब्दः, यदि वा कर्मवचनः-प्रयोगे न कश्चित् कर्मणि विशेषः॥२॥३॥

---

१-'तुमप' ख. ग. झ.। २-'यं' ख. ग. च. झ.। ३-'वति' च. ४-'अथा क.। ५-'नामयतीत्युपन्यासमात्रमेवैतत्, अत्रानेक (प्राप्तानेक) गुणश्रुतेस्तूत्तरावेव विधी मन्तव्यौ' इति ज पु. पाठः। ६-'इति पौर्णमास्यामित्यापि लैङ्गिक्या एव व्यवस्थाया अनुवादः' इत्यधिकं ज.। ७-'समुदायवचनः' ज.। ८-पदमिदं नास्ति ज.।

यद्यु ऽअध्वर्युः । इन्द्राग्न्योरुज्जितिमनूज्जयत्वयं यजमानो व्वाजस्यैनं प्रसवेन प्रोहामीन्द्राग्नी तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि व्वाजस्यैनं प्रसवेनापोहामीत्यमावास्यायामैन्द्राग्नꣳ ह्यामावास्यꣳ हविर्भवत्येवं यथादेवतं व्यूहति तद्यदेवं व्यूहति ॥ ४ ॥

यजमान ऽएव जुहूमनु । योऽस्मा ऽअरातीयति स ऽउपभृतमनु प्राञ्चमेवैतद् यजमानमुदूहत्यपाञ्चं तमपोहति योऽस्मा ऽअरातीयत्यत्तैव जुहूमन्वाद्यं ऽउपभृतमनु प्राञ्चमेवैतदत्तारमुदूहत्यपाञ्चमाद्यमपोहति ॥ ५ ॥

तद्वा ऽएतत् । समान ऽएव कर्म्मन् व्याक्रियते तस्मादु समानादेव पुरुषादत्ता चाद्यश्च जायते ऽइदꣳ हि चतुर्थे पुरुषे तृतीये सङ्गच्छामह ऽइति विदेवं दीव्यमाना जात्या ऽआसत ऽएतस्मादु तत् ॥६॥

---

तमपनुदतां–योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः,–वाजस्यैनं प्रसवेनापोहामि' ( वा. सं. २।१५ ) इति–यदि स्वयं यजमानः ॥ यद्यु अध्वर्युः–'इन्द्राग्न्योरुज्जितिमनूज्जयत्वयं यजमानो–वाजस्यैनं प्रसवेन प्रोहामि । इन्द्राग्नी तमपनुदतां–यमयं यजमानो द्वेष्टि, यश्चैनं द्वेष्टि,–वाजस्यैनं प्रसवेनापोहामि'–इति अमावास्यायाम् । ऐन्द्राग्नं ह्यामावास्यं हविर्भवति । एवं यथादेवतं व्यूहति । तद्यदेवं व्यूहति ॥ यजमान एव जुहूमनु । योऽस्मा अरातीयति स उपभृतमनु । प्राञ्चमेवैतद् यजमानमुदूहति, अपाञ्चं तमपोहति–योऽस्मा अरातीयति । अत्तैव जुहूमनु । आद्य उपभृतमनु । प्राञ्चमेवैतद् अत्तारमुदूहति, अपाञ्चमाद्यमपोहति ॥ तद्वा एतत् समान एव कर्मन् व्याक्रियते । तस्मादु समानादेव पुरुषाद् अत्ता चाद्यश्च जायेते । इदं हि–चतुर्थे पुरुषे तृतीये संगच्छामहे–इति विदेवं दीव्यमाना जात्या आसते–एतस्मादु तत् ॥

---

एवं यथादेवतं व्यूहतीत्यर्थवत्त्वाय विधिः । ततश्च "अग्नेरग्नीषोमयोरिति पौर्णमास्याम्", 'अग्नेर्विष्णोरिन्द्रस्येति' सान्नाय्ययाजिनोऽमावास्यायां प्रयोगः सिद्धः । ननु च या–या यत्र–यत्र देवता तां–तां तत्र–तत्रेत्यस्मिन्नर्थे अयमव्ययीभावः समासो यथादेवतमिति, ततश्च प्रयाजादिदेवताभिरपि व्यूहनं प्राप्नोति ? नैष दोषः । प्रधानदेवते अग्निषोमाविन्द्राग्नी याजकस्य । एवंशब्देन प्रधानदेवतालक्षणमिति प्रकारमतिदिशति । ततश्च प्रधानदेवताभिरेव व्यूहनम्, नान्याभिः; असर्वाभिरित्यर्थः ॥ ४ ॥

**यजमानः ।** प्रसन्ना ॥ ५ ॥

**तद्वा एतत् ।** यस्माद् 'एतत्' 'समाने' अभिन्ने, व्यूहनकर्मणि विलक्षणम् 'आक्रियते' अभिव्यज्यते,

---

१–'अध्वर्य्युः' ग. । २–'र्भ्भव' च. एवं बहुत्र प्रायेण । ३–'मुनु' क. । 'मनु' झ. । ४–'यज'–क. । ५–'थ उ' ख. ग. झ. । ६–'कर्म्मन्' क. । ७–'तत्' ख. ग. झ. ८–तयोरनुकरणस्य–ज. । ९–प्रकारमतिदिश्यते–ज. । १०–'व्यूहत । न सर्वाभिरित्यर्थः–ज. ।

भोक्तृत्वं भोग्यत्वञ्च; तस्माद्यज्ञानुकारेण भूतेष्वपि 'समानाद्' अभिन्नात् पुरुषाद् 'अत्ता च' भोक्ता च, 'आद्यश्च' भोग्यश्च—भर्ता च भार्या च 'जायेते' । यथा समाने कर्मणि जुहूपभृतौ तथैव ।

ननु समानजातीययोर्विवाह एव नास्ति, कुतो भोक्तृभोग्यभावः? पशुन्यायेन सैति सापि कश्चिद्र्त्तेत, न स यज्ञानुकारः स्यात्; किं तर्हि? यजमानैकतानुकारः स्यात्? सत्यम्; एवं व्यवहारस्य अन्याय्यस्यापि यज्ञमूलत्वात् । तमेव व्यवहारं दर्शयति—**इदं हीति** । ( यस्माद् 'इदं' प्रत्यक्षं विलक्षणम् 'आसते' अधुनापि 'जात्याः' समानजातीयाः ), 'दीव्यमानाः' रममाणाः परितुष्टान्तःकरणाः नाकार्यकारिण इवापरियुनाः 'आसते' कथं दीव्यमानाः? 'विदेवम्' दिवेर्व्यवहारार्थस्य ( दिवा. पर. १ ) अन्योन्यं भोक्तारो भोग्यैः सह, भोग्या भोक्तृभिः सह 'दीव्यामहे' व्यवहृत्य व्यवहृत्य । कथं व्यवहृत्य? व्यवहर्तॄणामभिप्रायेण । व्यवहारं दर्शयति—'इदं' प्रत्यक्षमेव—विवाहेन वयं सङ्गच्छामहे । एकस्मादेव पुरुषान्मूलतः उत्पद्य, पुनरेव कुटुम्बारम्भेण समानापत्यारम्भेण च संयुज्यामह इति भर्तॄणां भार्याणां चाभिप्रायवचनम् । एवं व्यवहारं दीव्यमाना आसते । ते क पुनः सङ्गच्छामह इत्याहुः, किमनन्तर एव पुरुषे? नेत्याह—**'चतुर्थे तृतीये'** । वा शब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः; चतुर्थे वा तृतीये वेत्यर्थः । तथा च काण्वानां "तृतीये चतुर्थे वा"—इति श्रूयते । ( तृतीये पुरुषे सगच्छामह इति, चतुर्थे सङ्गच्छामह इति च युज्यते ) चतुर्थे सङ्गच्छामह इति सौराष्ट्राणां व्यवहारः । तृतीये सङ्गच्छामह इति दाक्षिणात्यानाम् । ते हि मातुलदुहितृषु पितृष्वसृपुत्रेषु सङ्गच्छन्ते । ते च मूलपुरुषाद्गण्यमानास्तृतीया भवन्ति । तत्रैतस्माल्लिङ्गादेवं दीव्यमाना आसत इति । तत्र न जात्याः न जातीयाः, सदृशाः; श्रेयसः कर्म्मणश्चतुरन्तरस्याभ्यन्तरा इत्यर्थः । ततः किम्? एतस्मादेव सगव्यूहनात् कारणात् तथा भवतीति शेषः ॥

एवं चानुष्ठितं कथं विवहनमिति समुदये श्रुतितो निर्णयः । स्थाली चाङ्गाराश्चेकम्, स्रुक् च स्रुवश्चेत्येकम्, आहवनीयश्च समिच्चेत्येकम्; आहुतिश्च स्वाहाकारश्चेत्येकम्; इत्थं चत्वारः । चतुर्थे निवृत्ते तृतीये च निवृत्ते वयं सङ्गच्छामह इति शिष्टानां समुदयः । चतुर्थे प्रयाजे समानीय, पञ्चमेऽनुयाजे च समानीय, ततो व्यूहनमिति देशव्यवहृत्यनुसारात्; न शास्त्रप्रवृत्तेः । यथा "मातुलस्य सुतां कश्चित् पितृस्वसृसुतादिकाम् । विवहन्ति क्वचिद्देशे सङ्कोच्यापि सपिण्डताम्" ( निर्ण. सि. भृतशातातपः ) इति । "आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व । तृप्तां जुहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयीव वामि वा"—( ऋ. सं, १०।१०।९ ) इति ऋग्वेदे विवहनमेव । "असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ( मनुसं. ३ अ. ५. श्लो. ) इति मनोः सङ्गत्या मूलतः षण्मिथुनान्यतीत्य विवहेदिति श्रौतं विवहनम् । "यो ह वा अग्निहोत्रे षण्मिथुनानि वेद, मिथुनेन—मिथुनेन ह प्रजायते"—( श. प. ११।२।५।१ ) इति षण्मिथुनानि । इत्थं मिथुनसङ्गत्या परिणयनमिति जात्याः । न चेयं श्रुतिर्विवाहविषया, किन्त्वियम्सन्तानावर्ण्यविभाग-

१ 'समानजातयो'– ज. । २ नास्तीदं ज. झ. । ३ यज्ञमूलत्वादन्याय्यस्यापि– ज. झ. । ४ 'इदमासते—कथमासते?' इत्येव बन्धनीभूतपाठस्थाने ज. । ५ इव परियुनाः—ज. । ६ पदमिदं नास्ति ज. । ७ व्यवहृत्येत्येव ज. । ८ पुनरेककुटुम्बारम्भेण—ज. झ. । ९ योषितां—ज. झ. । १० काण्वानां तृतीये पुरुषे संगच्छामह इति श्रूयते, चतुर्थे संगच्छामह इति युज्यते—ज. । ११ बन्धनीभूतः पाठोनास्त्येव क्वचित । १२ मातुलदुहितुः—ज. । १३ एवं दीव्यमाना—ज. । १४ तत्र जाया न जातीयाः—सदृशाः—ज. । १५ 'श्चतुर्वर्णान्तरस्याभ्यन्तरा—ज. । १६ ततथा ज. झ. । १७ इतः परमयं षष्ठकण्डिकान्तो ग्रन्थो नास्ति ज. झ. । १८ इहवामे ११।२।५।१ ।

अथ जुह्वा परिधीन्त्समनक्ति। यया देवेभ्योऽहौषीद्युया यज्ञᳪं समतिष्ठिपत्तयैवैतत् परिधीन्[2] प्रीणाति तस्माज्जुह्वा परिधीन्त्समनक्ति ॥ ७ ॥

स समनक्ति। वसुभ्यस्त्वा[3] रुद्रेभ्यस्त्वादित्येभ्यस्त्वेत्येते[4] वै[5] त्रयो[6] देवा यद्वसवो रुद्रा ऽआदित्या ऽएतेभ्यस्त्वेत्येवैतदाह[7][8] ॥ ८ ॥

अथ परिधिमभिपद्याश्रावयति। परिधिभ्यो ह्येतदाश्रावयति यज्ञो वा ऽआश्रावणं यज्ञेनैवैतत् प्रत्यक्षं परिधीन् प्रीणाति तस्मात् परिधिमभिपद्याश्रावयति ॥ ९ ॥

---

अथ जुह्वा परिधीन् समनक्ति। यया देवेभ्योऽहौषीद्, यया यज्ञं समतिष्ठिपत्-तयैवैतत् परिधीन् प्रीणाति। तस्माद् जुह्वा परिधीन् समनक्ति ॥ स समनक्ति-'**वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वा**' ( वा. सं. २।१६ ) इति। एते वै त्रया देवाः-यद् वसवो रुद्रा आदित्याः। एतेभ्यस्त्वेत्येवैतदाह ॥ अथ परिधिमभिपद्याश्रावयति। परिधिभ्यो

---

प्रशंसा। यथा जुहूपभृतौ चिरकालं सह स्थिते, तथा तृतीयचतुर्थसन्तानावधि सह स्थितिः। ततः किम्? 'एतस्माद्' एवम्प्रकारेण स्रुग्व्यूहनात् 'तद्' विवहनम्। 'उ' इति "अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण" ( निरु. १. २. ४. ) इति यास्कभणितेरुकारो विनिग्रहार्थीयः। एवं चात्र विनिग्रहार्थः। यथा-मूलात् पडतीत्य ततो विवहनम्, मूलात् षष्ठे च पञ्चातीत्य, इत्येवं प्रदर्शनपरम्। स्त्रीमिथुने पुम्मिथुने चेति 'तत्' तथा भवतीति विशेषः ॥ ६ ॥

**अथ जुह्वा**। 'समनक्ति' संस्नेहयति। 'जुह्वा' स्रुक्-पात्रेण, अर्थात्तद्गतेनाज्येन। **यया देवेभ्यः** इति। परिधयोऽपि ह्यग्नयो देवाः, तेऽपि देवपात्रेण देवान्नमर्हन्ति; पोलयित्वा[9] तु न समग्रमित्यभिप्रायः। 'अहौषीत्' हुतवानध्वर्युः। 'समतिष्ठिपत्' संस्थापितवान् ॥ ७ ॥

**स समनक्ति**। त्रय एते मन्त्राः। एषामेकैकेन[10] एकैकमुपधानक्रमेण यथाक्रममनक्ति। 'एतेभ्यस्त्वेत्येवैतदाह'-इत्यपि प्रत्येकाभिप्रायम्। वसुभ्यो देवेभ्योऽर्थाय त्वामानज्मि। त्वयि पार्थिवाग्न्यात्मके तृप्ते पार्थिवा वसवस्तृप्यन्ते; वस्वर्थं त्वामनज्मीत्यर्थः। एवमुत्तरत्रापि योज्यम् ॥ ८ ॥

**अथ परिधिम्**। 'अभिपद्य' अभिगम्य, हस्तेनालभ्येत्यर्थः।

**परिधिभ्यो हीति**। ननु सूक्तवाकप्रैषायैतदाश्रावयति, तद्द्वारेण च सूक्तवाकदेवताभ्यः, प्रस्तराय वा, परिधीनां किमापतितम्? सत्यमेतत्। तद्देवत्वाद्यज्ञार्हाः परिधयः, तेन प्रसिद्धयज्ञोपकरणेनाश्रावणेन परार्थेनारोप्यालभ्य क्रियमाणेन लेशतो यज्ञभाजः कृता भवन्तीत्युपकारमात्रलक्षणार्था तादर्थ्ये चतुर्थी प्रयुक्ता। प्रत्यक्षमव्यभिचारि यज्ञरूपमाश्रावणम्। तेन[11] 'एतत् प्रत्यक्षम्' यो यज्ञः; जुहूस्तु होमेष्वपि यज्ञेष्वपि भवतीति तन्न तथा प्रत्यक्षः जुह्वाञ्जने यज्ञः ॥ ९ ॥

---

१ 'द् यया' क.। २ 'धीन्' क.। ३ 'वसु' ख. ग. झ.। ४ 'त्येभ्य' क.। ५ 'वै' क.। ६ 'त्रयो' ग.। ७ 'त्स्वेत्ये' क.। ८ 'दाह' च.। ९ 'पलायित्वा'-झ.। १० एकैकेनेति नास्ति ज.। ११ स प्रत्यक्षो यज्ञः-ज.।

अथ देवानां पत्नीर्यजति । पत्नीषु वै योनौ रेतः प्रतिष्ठितं तत्ततः प्रजायते तत्पत्नीष्वेवैतद्योनौ रेतः सिक्तं प्रतिष्ठापयति तत्ततः प्रजायते तस्माद्देवानां पत्नीर्यजति ॥ ११ ॥

स यत्र देवानां पत्नीर्यजति । तत्पुरस्तात्तिरः करोत्युप ह वै तावद्देवता ऽआसते यावन्न समिष्टयजुर्जुहतीदं नु नो जुहत्विति ताभ्य एवैतत्तिरः करोति तस्मादिमा मानुष्य स्त्रियस्तिर इवैव पुꣳसो जिघत्सन्ति या ऽइव तु ता ऽइवेति ह स्माह याज्ञवल्क्यः ॥ १२ ॥

रोति । तस्मात् त्वष्टारं यजति ॥ अथ देवानां पत्नीर्यजति ( ३ ) । पत्नीषु वै योनौ रेतः प्रतिष्ठितं, तत्ततः प्रजायते । तत्पत्नीष्वेवैतद्योनौ रेतः सिक्तं प्रतिष्ठापयति तत्ततः प्रजायते । तस्माद् देवानां पत्नीर्यजति ॥ स यत्र देवानां पत्नीर्यजति तत्पुरस्तात्तिरः करोति । उप ह वै तावद्देवता आसते—यावन्न समिष्टयजुर्जुह्वति इदं नु नो जुहत्विति । ताभ्य एवैतत्तिरः करोति । तस्मादिमा मानुष्यः स्त्रियस्तिर इवैव पुंसो जिघत्सन्ति । या इव तु ता इवेति ह

'त्वष्टा' वायुः सोऽध्यात्ममवस्थितः सिक्तमात्रमेव 'रेतः' यावत् पर्याप्तं यस्य प्राणिनः, तावन्ति तस्य सूक्ष्मविभागानि त्वष्टिरूपाणि करोति । तत्प्राणिप्रयत्नानुसारेण, तावन्त्येव यज्ञेऽपि सिध्यते यथा निरूपयेत् दर्शनीयः सोऽयं यक्ष्यत इति तस्य पर्यवसितमित्याह ॥ १० ॥

**अथ देवानां पत्नी । पत्नीषु वै योनाविति** । पत्न्य एव 'योनि' प्रजोत्पादनस्थानम्, तस्मिन्नेव 'रेतः' 'प्रतिष्ठितम्' । 'ततः' तस्मा च 'प्रजायते' अपत्यरूपेण; पत्नीनां योनिषु निषिक्तरेतसः प्रसूतिर्भवति । 'तत्पत्नीष्वेव' योनिभूतासु 'सिक्तं रेतः' प्रतिष्ठापयति । 'ततः' 'ताभ्यो' देवानां पत्नीभ्यः 'प्रजायन्ते' सर्वाः; योषितोऽनुत्पद्यन्त इत्यभिप्रायः ॥ ११ ॥

**स यत्र देवानाम्पत्नीः** । तत्पुरस्तात्तिरः करोति अन्तर्द्धानमाहवनीयात् । ताभ्य एवैतत् 'तिरः' अन्तर्द्धानं 'करोति' । 'तस्मात्' हेतोः 'मानुष्यः स्त्रियः' 'तिर इव' 'पुंसः' ''अन्तर्द्धौ येनादर्शनमिच्छति''—इत्यपादानात्पञ्चमी पा० सू० १ । ४ । २८ 'पुंसः' इति । पुंसः अन्तर्हिता, पुंसः अदृश्यमाना 'जिघत्सन्ति' भक्षयितुमिच्छन्ति । 'या इव'—इत्यनुकारः । याः पुंसः पुरो जिघत्सन्त्यश्नन्ति स्त्रियः, 'ता इव' । अस्मादज्ञानानुकारात् 'इत्याह याज्ञवल्क्यः' । अदृश्यमानाः पुंसः समक्षमश्नन्तोऽश्नन्ति; तथैवानोऽनुकारादित्यभिप्रायः ॥ १२ ॥

१-'ष्वेवै' इति ख. ग. ङ. । २-'ता आस' इति ख. ग. घ ङ । ३-'जिघत्सन्ति' इति ख. ग. ङ. । ४-'या इव' इति ख. ग. घ ङ. । 'या' इति ख । ५-'ता-इवे' इति ख. ग घ. ङ. । ६-'योनिस्थानं' इति ज. । ७-'नास्त्येतद्' ज । ८-'पुंस आदृश्यमाना' इति ङ. ।

अथाग्निं गृहपतिं यजति । अयं वा ऽअग्निर्लोकः । इममेवैतल्लोकमिमाः प्रजा ऽअभिप्रजनयति । ता ऽइमं लोकमिमाः प्रजा ऽअभिप्रजायन्ते तस्मादग्निं गृहपतिं यजति ॥ १३ ॥

तदिडान्तं भवति । न ह्यत्र परिधयो भवन्ति न प्रस्तरो यत्र वा ऽअदः प्रस्तरेण यजमानꣳ स्वगाकरोति पतिं वा ऽअनु जाया तदेवास्यापि पत्नी स्वगाकृता भवतीयसितꣳ ह कुर्याद्यत्प्रस्तरस्य रूपं कुर्यात् तस्मादिडान्तमेव स्यादुतो प्रस्तरस्यैव रूपं क्रियते॥ १४॥

---

स्माह याज्ञवल्क्यः ॥ अथाग्निं गृहपतिं यजति ( ४ ) । अयं वा अग्निर्लोकः । इममेवैतल्लोकमिमाः प्रजा अभिप्रजनयति । ता इमं लोकमिमाः प्रजा अभिप्रजायन्ते । तस्मादग्निं गृहपतिं यजति ॥ तदिडान्तं भवति । नह्यत्र परिधयो भवन्ति, न प्रस्तरः । यत्र वा अदः प्रस्तरेण यजमानं स्वगाकरोति, पतिं वा अनु जाया—तदेवास्यापि पत्नी स्वगाकृता भवति । इयसितं ह कुर्याद्--यत्प्रस्तरस्य रूपं कुर्यात् । तस्मादिडान्तमेव स्यात् । उतो प्रस्तरस्यैव

**अथाग्निं गृहपतिम्** । 'अयं लोकोऽग्निः' गृहपतिः । गार्हपत्यो हि गृहपतिः; ''अयमग्निर्गार्हपत्यः''—इति वचनात्; गार्हपत्यश्चायं लोकः । ततश्च यत् 'अग्निं' 'गृहपतिं यजति' तत् 'इमं लोकम्' लोकोपलक्षिते देशे 'प्रजाः प्रजनयति' । ततश्च यज्ञानुकारेण तथैव 'ताः प्रजायन्ते' ॥ १३ ॥

**तदिडान्तम्** । इडान्तवत् 'इडान्तम्' । 'इडान्तं' यजनान्तमित्यभिप्राये, तद् इडा पत्नीसंयाजेषु विधीयते । तस्माच्च पूर्वोक्त एव विधिः । अर्थवादोऽपि च पूर्वोक्त एवेति नोक्तः । तस्माद्यज्ञेऽवकल्पयेत्यादि यथैव हि देवेष्विडावक्लृप्ता, तथा स्त्रीष्वपि देवेष्वित्यभिप्रायः । ''न ह्यत्र परिधयः''—इत्यादिस्तु इडाया अन्तत्वेऽर्थवादः । तत्राभिप्रायः । अत्रापि पत्नी यज्ञे यथैव इडा देवयज्ञे भवत्येवं सूक्तवाक—शंयुवाकाभ्यामपि भवितव्यमित्यत आह—**न ह्यत्र परिधयो भवन्ती**ति । परिधिप्रस्तरसम्बन्धौ सूक्तवाक—शंयुवाकौ तदभावेऽनुपपन्नावित्यभिप्रायः । ननु च प्रस्तरप्रहरणेन यजमानः स्वगाकृतो देवयज्ञः, अत्रापि यज्ञे पत्नी तथा स्वगाकर्तव्या; इतरथा तु स्वर्गाल्लोकान्तरितैव स्यात् ? इत्यत आह—**प्रस्तरेणे**ति । प्रस्तरकरणे 'इयसितं ह कुर्यात्' 'इयस'—शब्दोऽवसानवचनः कण्ड्वादिषु पठ्यते । अवसन्नमवसादं[6] पत्न्याः कुर्याद्;—यजमाने गच्छति स्वर्गं लोकं पत्नी न गता, अत्रैवावसन्ना सा, अधुना यातीत्येतत्कुर्याद्; न च युक्तम्; पतिं ह्यनु च जायेत्यभिप्रायः ॥ १४ ॥

१—'लोक इमं' इति ख. ग. घ. ङ. । २—'प्रजा अभि' इति ख. ग. घ. ङ. । ३—'ता इमं' इति ख. ग. घ. ङ. । ४—'लोकं' इति ख. । ५—'प्रजा अभि' इति ख. ग. घ. ङ. । ६—'अवसानमवसादं' इति ङ. ।

स यदि प्रस्तरस्य रूपं कुर्याद् । यथैवादः प्रस्तरेण यजमानᳪ स्वगाकरोत्येवमेवैतत् पत्नीᳪ स्वगाकरोति ॥ १५ ॥

स यदि प्रस्तरस्य रूपं कुर्याद् वेदस्यैकं तृणमाच्छिद्याग्रं जुह्वामनक्ति मध्यᳪ स्रुवे बुध्नᳪ स्थाल्याम् ॥ १६ ॥

अथाग्नीदाहानुप्रहरेति । तूष्णीमेवानुप्रहृत्य चक्षुष्पा ऽअग्नेऽसि चक्षुर्म्मे पाहीत्यात्मानमुपस्पृशति तेनो ऽअप्यात्मानं नानुप्रवृणक्ति ॥ १७ ॥

अथाह संवदस्वेति । अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति ॥ १८ ॥

अथ जुहूं च स्रुवञ्च सम्प्रगृह्णाति । अदो वा आहुतिं करोति यदनक्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूञ्च स्रुवञ्च सम्प्रगृह्णाति ॥ १९ ॥

---

रूपं क्रियते ॥ स यदि प्रस्तरस्य रूपं कुर्यात् यथैवादः प्रस्तरेण यजमानं स्वगाकरोति-एवमेवैतत् पत्नीं स्वगाकरोति ॥ स यदि प्रस्तरस्य रूपं कुर्यात्-वेदस्यैकं तृणमाच्छिद्याग्रं जुह्वामनक्ति, मध्यं स्रुवे, बुध्नं स्थाल्याम् ॥ अथाग्नीदाह अनुप्रहरेति । तूष्णीमेवानुप्रहृत्य चक्षुष्पा अग्नेऽसि, चक्षुर्म्मे पाहि-इत्यात्मानमुपस्पृशति । तेनो अप्यात्मानं नानुप्रवृणक्ति ॥

अथाह-संवदस्वेति-अगानग्नीत्, अगन् । श्रावय, श्रौषट् । स्वगा दैव्या होतृभ्यः, स्वस्तिर्मानुषेभ्यः, शंयोर्ब्रूहि इति ॥ अथ जुहूं च स्रुवञ्च सम्प्रगृह्णाति ।

स यदि प्रस्तरस्य । 'प्रस्तरस्य' रूपं प्रतिनिधिं 'कुर्यात्', अध्वर्युः ततः यथैवाद इति । स्वेनैव महिम्ना यजमानवत् तां 'स्वगाकरोति' नातिरिक्तामानयतीत्यर्थः ॥ १५ ॥

स यदि । प्रसन्ना ॥ १६ ॥

अथाग्नीदाह । स प्रस्तरस्य वचनात् सक्तार्को मा प्रापदित्याह--अथाग्नीदाहेति । यावदुक्तमेव भवति; प्रैषसामर्थ्यात्; न सूक्तवाकमाह ॥ १७ ॥

अथाह संवदस्व । प्रसन्ना ॥ १८ ॥

अथ जुहूं च स्रुवं च सम्प्रगृह्णातीति । होतुः तस्यमाज्यम; न तु चरन्तन् तृणस्याहुतिकरणार्थत्वम् । किं कारणम् ? 'अदः वा' तृणमग्रं, 'आहुतिं करोति' । 'यत्' तत् 'अनक्ति' अग्र जुह्वामित्यादि । किमर्थं जुहूञ्च स्रुवञ्च सम्प्रगृह्णाति, किमर्थं वानक्ति ? 'आहुतिर्भूत्वा' इदमाज्य 'देवलोकं गच्छादिति' ॥ १९ ॥

---

१-'या' इति ख. ग. । 'या' इति क. । २-'यां' इति क. । 'या' इति ख. ग । ३-'चक्षुष्या' इति ख. ग. घ ङ । ४-'हो' इति क. । 'ही' ख ग । ५-इत एते मन्त्रा एतत्प्रकरणस्थाः प्रचलितसंहितापाठे न सन्ति ।

स वा ऽअग्नये सम्प्रगृह्णाति । अग्नेऽदब्धायोऽशीतमेत्यमृतो ह्यग्निस्तस्मादाहादब्धायवित्यशीतमेत्यशिष्टो ह्यग्निस्तस्मादाहाशीतमेति पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या ऽइति सर्वाभ्यो मार्तिभ्यो गोपायेत्येवैतदाहाविषं नः पितुं कृणिवत्यन्नं वै पितुरनमीवं नं ऽइदमकिल्बिषमन्नं कुर्वित्येवैतदाह सुषदा योनावित्यात्मन्येतदाह स्वाहावाडिति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥ २० ॥

अथ व्वेदं पत्नी व्विस्रꣳसयति । योषा वै व्वेदिर्व्वृषा व्वेदो मिथुनाय वै व्वेदः क्रियतेऽथ यद्देनेन यज्ञं उपालभते मिथुनमेवैतत्प्रजननं क्रियते ॥ २१ ॥

---

अदो हैवाहुतिं करोति यदनक्ति । आहुतिर्भूत्वा देवलोकं गच्छादिति । तस्माज्जुहूश्च स्रुवश्च सम्प्रगृह्णाति ॥ स वा अग्नये सम्प्रगृह्णाति–अग्नेऽदब्धायोऽशीतम–इति । अमृतो ह्यग्निः । तस्मादाह–अदब्धायो–इति । अशीतम–इति । अशिष्टो ह्यग्निस्तस्मादाह–अशीतम–इति । पाहि मा दिद्योः, पाहि प्रसित्यै, पाहि दुरिष्ट्यै, पाहि दुरद्मन्यै–इति । सर्वाभ्यो मा आर्तिभ्यो गोपायेत्येवैतदाह । अविषं नः पितुं कृणु–इति । अन्नं वै पितुः अनमीवं न इदमकिल्बिषमन्नं कुर्वित्येवैतदाह । "सुषदा योनौ"–इति । आत्मन्येतदाह । स्वाहा वाड् ( वा० सं० २ । २० )–इति । तद्यथा वषट्कृतं हुतम्–एवमस्यैतद्भवति ॥ अथ वेदं पत्नी विस्रंसयति । योषा वै वेदिः । वृषा वेदः । मिथुनाय वै वेदः

---

**स वा अग्नये** । 'अशीतमः' भोक्तृतमः ( धा० पा० क्र्या० ५१ ) 'अनमीवम्' अमीवा व्याधिः, स यस्य कार्यतया नास्ति, तदनमीवम् । 'आत्मनि' अग्नौ; दक्षिणाग्निहोमादि शाखान्तरात् ॥ २० ॥

**अथ वेदं** । का० श्रौ० सू० ३।१५६ । विस्रंसनमुपन्यस्तमेव, अर्थवादस्तु "यद्धि युक्तं न विमुच्यते प्र तद्धयते"–इति ( श० प० ६ का० ७ अ० ४ ब्रा० ८ कं० ) गम्यमान एवेति नोक्तः । पत्न्यास्तु कर्तृत्वेऽर्थवादं वक्ष्यति–"अथ यत्पत्नी विस्रंसयति"–इति ( श० प० १ कां० ९।२।२२ ) अधुना विस्रंसनप्रसङ्गादुत्पत्ति–विनियोगौ वेदस्याह । तत्रोत्पत्तिस्तावत् **योषा वै वेदिरिति** । विनियोगः–'अथ यत्' 'एनेन' वेदेन 'यज्ञे' किञ्चित् 'उपालभते' उपगृह्णाति, गृहीतमपि सत् 'उपचर्याय' उपकाराय सुगृहीतत्वाद् यद् गृह्णाति; यत् 'मिथुन क्रियते'; उपप्रायस्य च वेदस्य वेद्युपग्रहणे विनियोगः ।

---

१–'न इदं' इति ख. ग. घ. ञ. । २–'यज्ञ ऽउपा' इति ख. झ. ग. । ३– 'अश्नाति भुङ्क्ते इत्यशी अतिशये नाशी अशितम । दीर्घश्छान्दस इति वा. सं. २।२० महीधरभाष्योक्तेः । "अग्नये संवेशपतये स्वाहा । सरस्वत्यै यशोभगिन्यै स्वाहा"–मन्त्रस्त्वेतावन्मात्रः ।

अथ यत्पत्नी व्विस्रꣳसयति । योषा वै पत्नी वृषा व्वेदो मिथुनमेवैतत्प्रजननं क्रियते । तस्माद्वेदं पत्नी व्विस्रꣳसयति ॥ २२ ॥

सा व्विस्रꣳसयति । व्वेदोऽसि येन त्वं देव व्वेद देवेभ्यो व्वेदो भवस्तेन मह्यं व्वेदो भूया ऽइति यदि यजुषा चिकीर्षेदेतेनैव कुर्यात् ॥ २३ ॥

तमा वेदेः सꣳस्तृणाति । योषा वै व्वेदिर्वृषा व्वेदः पश्चाद्वै परीत्य व्वृषा योषामधिद्रवति पश्चादेवैनामेतत्परीत्य वृष्णा व्वेदेनाधिद्रावयति तस्मादा वेदेः सꣳस्तृणाति ॥ २४ ॥

क्रियते । अथ यदेनेन यज्ञ ऽउपालभते, मिथुनमेवैतत्प्रजननं क्रियते ॥ अथ यत्पत्नी विस्रंसयति । योषा वै पत्नी, वृषा वेदः । मिथुनमेवैतत्–प्रजननं क्रियते । तस्माद्वेदं पत्नी विस्रंसयति ॥ सा विस्रंसयति–वेदोऽसि; येन त्वं देव वेद, देवेभ्यो वेदो भवः, तेन मह्यं वेदो भूयाः–इति । यदि यजुषा चिकीर्षेद्–एतेनैव कुर्यात् ॥ तमा वेदेः संस्तृणाति । योषा वै वेदिः । वृषा वेदः । पश्चाद्वै परीत्य वृषा योषामधिद्रवति । पश्चादेवैनामेतत्परीत्य वृष्णा वेदेनाधिद्रावयति । तस्मादा वेदेः संस्तृणाति ॥

---

स च एकद्रव्ये इत्येतन्मिथुनवचनादेव गम्यते; नैकद्रव्ये हि कर्मणि अनावृत्तौ तेषां परस्योत्तान्योन्यमिव मिथुनं सिद्धम् । तदपि साज्ये कर्मणि सम्नयहोमादौ वेदोपग्रहणम्, न सर्वत्रेत्येतच्छाखान्तरात् ॥ २१ ॥

**अथ यत् पत्नीः** प्रसन्ना ॥ २२ ॥

**सा विस्रंसयति** । 'यदि यजुषा' कर्तुमिच्छेदिति 'यदि'–शब्दात् पाक्षिकं वेदस्य यजुषा करणमिति गम्यते । अथ यजुषा करणचिकीर्षानुपपन्नेति सामर्थ्यात् पतिः कुर्यादिति । तत्र करणसामान्याद्यानिर्वापकाले चिकीर्षति । कः पुनः कुर्यात् ? यजमानः; शाखान्तरात् "मह्यं भूयाः" इति मन्त्रलिङ्गाच्च ॥ २३ ॥

**तमा वेदः** का० श्रौ० सू० ३ । १८ । 'आङ्' अत्राभिविधौ, सम्तयन वेदि व्याप्येति । "योषा वै वेदिर्वृषा वेदः"–इति शेषात् । वेदिं सम्तृणाति समाख्यानादध्वर्युः; हौत्रे तु विशेषवचनाद्धोता सम्तृणाति ॥ २४ ॥

१–'पत्नी' इति ख । २–'भवस्तेन' इति ख ग घ. ञ. । ३–'भूया इति' इति ख. ग. घ. ञ. ।
४ नैतत्पदं ज. पुस्तके । ५–'इति वचनादाशीर्याग. इति ज. ।

अथ समिष्टयजुर्जुहोति । प्राङ्मे यज्ञोऽनुसन्तिष्ठाता ऽइत्युथ युद्धुत्वा समिष्टयजुः पत्नीः संयाजयेत् प्रत्यङ्ङु हैं वास्यैष यज्ञः सन्तिष्ठेत तस्माद्वा ऽएतर्हि समिष्टयजुर्जुहोति प्राङ्मे यज्ञोऽनुसन्तिष्ठात ऽइति ॥ २५ ॥

अथ यस्मात्समिष्टयजुर्नाम । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते सर्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्वासु समिष्टास्वथैतज्जुहोति तस्मात्समिष्टयजुर्नाम ॥ २६ ॥

अथ यस्मात्समिष्टयजुर्जुहोति । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायत ऽउप ह वै ता ऽआसते यावन्न समिष्टयजुर्जुह्वतीदं नु नो जुहृत्विति ता ऽएवैतद्यथायथं व्यवसृजति यत्र यंत्रासां चरणं तदनु यज्ञं वा ऽएत ऽर्जीजनत यदेनमतत तं जनयित्वा यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात्समिष्टयजुर्जुहोति ॥ २७ ॥

स जुहोति । देवा गातुविद ऽइति गातुविदो हि देवा गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह गातुमितेति तदेतेन यथायथं व्यवसृजति मनसस्पत ऽइमं देव यज्ञँ स्वाहा वाते धा इत्ययं वै यज्ञो योऽयं पवते तदिमं यज्ञँ सम्भृत्यैतस्मिन् यज्ञे प्रतिष्ठापयति यज्ञेन यज्ञँ सन्दधाति तस्मादाह स्वाहा वाते धा ऽइति ॥ २८ ॥

[ अथ समिष्टयजुः । ]

अथ समिष्टयजुर्जुहोति—'प्राङ्मे यज्ञोऽनुसन्तिष्ठाता' इति । अथ यद्धुत्वा समिष्टयजुः पत्नीः संयाजयेत्—प्रत्यङ्ङु हैवास्यैष यज्ञः सन्तिष्ठेत । तस्माद्वा एतर्हि समिष्टयजुर्जुहोति—प्राङ्मे यज्ञोऽनुसन्तिष्ठाता इति ॥ अथ यस्मात्समिष्टयजुर्नाम । या वा एतेन यज्ञेन देवता ह्वयति—याभ्य एष यज्ञस्तायते, सर्वा वै तत्ताः समिष्टा भवन्ति । तद् यत् तासु सर्वासु समिष्टासु—अथैतज्जुहोति । तस्मात्समिष्टयजुर्नाम ॥ अथ यस्मात्समिष्टयजुर्जुहोति । या वा एतेन यज्ञेन देवता ह्वयति—याभ्य एष यज्ञस्तायते, उप ह वै ता आसते—यावन्न समिष्टयजुर्जुह्वति—'इदं नु नो जुहुतु' इति । ता एवैतद्यथायथं व्यवसृजति—यत्रयत्रासां चरणं तदनु । यज्ञं वा एतदजीजनत—यदेनमतत, तं जनयित्वा यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयति । तस्मात्समिष्टयजुर्जुहोति ॥ स जुहोति देवा गातुविद्—इति । गातुविदो हि देवाः ।

अथ समिष्टयजुः (का० श्रौ० सू० ३।१९८ प्रसन्नाश्वतसः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

१—'इत्यु' इति क. । २—'हुति' इति क. । 'हुति' ख. ग । ३—'यजु' इति क. । 'नाम' इति ख. ग. । 'र्नाम' इति क. । ४—'ता आसते' इति ख. ग. घ. ङ. । ५—'यत्रासां' इति ग ङ. । ६—'विद' इति ख. ग. घ. ङ. । 'विद' इति क. । ७—'यज्ञ' इति क. । ८—'धा इति' ख. ग. घ ङ. । ९—'हुति' इति ख. ग. । 'हुति' इति क.

अथ बर्हिर्जुहोति । अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक ऽओषधीर्दधाति ता ऽइमा ऽअस्मिँल्लोक ऽओषधयः प्रतिष्ठितास्तस्माद्बर्हिर्जुहोति ॥ २९ ॥

तां वा ऽअतिरिक्तां जुहोति । समिष्टयजुर्ह्येवान्तो यज्ञस्य यदूर्ध्वꣳ समिष्टयजुषोऽतिरिक्तं तद्यदा हि समिष्टयजुर्जुहोत्यथैताभ्यो जुहोति तस्मादिमा ऽअतिरिक्ता ऽअसम्मिता ओषधयः प्रजायन्ते ॥ ३० ॥

स जुहोति । सम्बर्हिरङ्क्ताꣳ हविषा घृतेन समादित्यैर्वसुभिः सम्मरुद्भिः समिन्द्रो विश्वेदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत स्वाहेति ॥ ३१ ॥

---

गातुं वित्त्वा—इति । यज्ञं विन्त्वेत्येवैतदाह । गातुमित—इति । तदेतेन यथायथं व्यवसृजति । मनसस्पत इमं देवयज्ञं स्वाहा वाते धाः— ( वा० सं० २।२१ ) इति । अयं वै यज्ञो योऽयं पवते । तमिमं यज्ञं सम्भृत्यैतस्मिन् यज्ञे प्रतिष्ठापयति । यज्ञेन यज्ञं सन्दधाति । तस्मादाह—स्वाहा वाते धाः—इति ॥ अथ बर्हिर्जुहोति । अयं वै लोको बर्हिः । ओषधयो बर्हिः । अस्मिन्नेवैतल्लोक ओषधीर्दधाति । ता इमा अस्मिँल्लोक ओषधयः प्रतिष्ठिताः । तस्माद्बर्हिर्जुहोति ॥ तां वा अतिरिक्तां जुहोति । समिष्टयजुर्ह्येवान्तो यज्ञस्य । यदूर्ध्वꣳ समिष्टयजुषः—अतिरिक्तं तत् । यदा हि समिष्टयजुर्जुहोति अथैताभ्यो जुहोति । तस्मादिमा अतिरिक्ता असम्मिता ओषधयः प्रजायन्ते ॥ स जुहोति—सं बर्हिरङ्क्तां हविषा घृतेन, समादित्यैर्वसुभिः सम्मरुद्भिः । समिन्द्रो विश्वेदेवेभिरङ्क्तां दिव्यं नभो गच्छतु

---

अथ बर्हिः का० श्रौ० सू० ३।८।१९ । 'अयं वै लोको बर्हिः' "बृहि वृद्धौ" धा० पा० भ्वा० प० ७३६ परिवृद्धोऽयं लोकः । ततः कियदेतद्बर्हिःशब्दवाच्यता च ओषधिवाच्यता च ? बर्हिःशब्दवाच्याऽऽत्मनाऽयं 'बर्हिरयं लोकः' तस्यापि बर्हिःशब्दकत्वात्, ओषधिरूपात्मना तस्मात् 'ओषधयः' । ततश्च यद् 'बर्हिः' अधियज्ञ 'जुहोति', तत् 'एतल्लोके' 'ओषधीः' बर्हिष ओषध्यात्मकत्वात् 'दधाति'; तत्रैव तथैव दृश्यते ॥ २९ ॥

तां वा अतिरिक्ताम् । बर्हिराहुतिं यजमानः 'अतिरिक्तां जुहोति' कथम् ? 'समिष्टयजुर्ह्येवान्तो यज्ञस्य'; तद्धि देवताविसर्जनार्थमित्यभिप्रायः । ततश्च या 'ऊर्ध्वं समिष्टयजुषः' साऽतिरिक्ता, सृष्टासु गतासु च देवतासु । 'यदा हि' । 'हि'—शब्दः 'च'-शब्दार्थे; यदा च 'समिष्टयजुर्जुहोति', 'अथ' अनन्तरम् 'एताभ्यः' ओषधिभ्यः । "तादर्थ्ये चतुर्थी" पा० सू० २ । ३ । १३ वा० २ ओषधयोऽस्मिँल्लोके कथं नाम भविष्यन्तीत्येवमर्थं 'जुहोति' ॥ ३० ॥

स जुहोति । प्रसन्ना ॥ ३१ ॥

---

१—'ता इ' इति ख. ग. घ. ङ. । २—'मा अ' इति ख. ग. घ. ङ. । ३—'ता अ' इति ख. ग. घ. ङ. । ४—'क्ता अ' इति ख. ग. घ. ङ. । ५—'वसु' इति क. । ६—'हेति' इति क. ।

अथ प्रणीता दक्षिणतः परीत्य निनयति। युङ्क्ते वा ऽएतद्यज्ञं यदेनं तनुते स यन्न निनयेत्पराङ् हाविमुक्तः ऽएव यज्ञो यजमानं प्रक्षिणीयात् तथो ह यज्ञो यजमानं न प्रक्षिणाति तस्मात्प्रणीता दक्षिणतः परीत्य निनयति ॥ ३२ ॥

स निनयति। कुस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति पोषायेति तत्पुष्टिमुत्तमां यजमानाय निगाह स येनैव प्रणयति तेन निनयति येन ह्येव योग्यं युञ्जन्ति तेन विमुञ्चन्ति योक्त्रेण हि योग्यं युञ्जन्ति योक्त्रेण विमुञ्चन्त्यथ फलीकरणान् कपालेनाधोऽधः कृष्णाजिनमुपास्यति रक्षसां भागोऽसीति ॥ ३३ ॥

---

यत स्वाहा (वा० मं० २।२२) इति ॥ अथ प्रणीता दक्षिणतः परीत्य निनयति । युङ्क्ते वा एतद् यज्ञम्[1]–यदेनं तनुते । स यन्न निनयेत्–पराङ् हा विमुक्त एव यज्ञो यजमानं प्रक्षिणीयात् । तथो ह यज्ञो यजमानं न प्रक्षिणाति । तस्मात्प्रणीता दक्षिणतः परीत्य निनयति॥ स निनयति–कस्त्वा विमुञ्चति स त्वा विमुञ्चति, कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति, पोषाय इति । तत्पुष्टिमुत्तमां यजमानाय निगाह । स येनैव प्रणयति–तेन निनयति । येन ह्येव योग्यं युञ्जन्ति–तेन–विमुञ्चन्ति । योक्त्रेण हि योग्यं युञ्जन्ति–योक्त्रेण

---

**अथ प्रणीताः** । अध्वर्युरुत्तरपार्श्वाद् दक्षिणपार्श्वं वेदेः ( आहवनीय प्रदक्षिणतो ) गत्वा स्वदेशेऽवस्थिता एव 'प्रणीताः' 'निनयति' नीचैर्नयति, भूमौ पर्यस्यतीत्यर्थः । 'युङ्क्ते वा' इति निनयनार्थवादः । 'दक्षिणतः' इत्येतस्य तु "तथा ह्युदग् भवति" इत्यर्थवादं वक्ष्यति ( श० प० १।९।३।१ ) 'पराङ्' अनावृत्तौ 'यज्ञो यजमानं प्रक्षिणीयात्' "क्षि हिंसायाम" ( स्वा० प० ३१ ) हिंस्यात् । 'तथा' नीयमानासु प्रणीतासु 'न प्रक्षिणाति' न हिनस्ति ॥ ३२ ॥

**स निनयति** । ( का० श्रौ० सू० ३ । १६० ) **तत्पुष्टिमुत्तमामिति** । पुष्टिहेतुरापः, तासु निरस्यमानासु मा भूत् पुष्टिनिरासस्तेन पुष्टिं निगाह–**उत्तमामिति**। आध्वर्यवस्यान्ते इत्यर्थः । आध्वर्यवे शिष्टम्–तच्च रक्षोनिरासप्रधानयागादि; ततश्च निनयनमेवाध्वर्योर्थिष्ठं उत्तममित्यभिप्रायः । **स येनैव प्रणयतीति** । कस्त्वेत्येताभिरनिरुक्ताभिर्व्याहृतिभिरित्यभिप्रायः । **अथ फलीकरणान् कपालेनाधोऽधः** । फलीक्रियन्ते तण्डुला एभिरिति फलीकरणा अङ्गीभवन्ति तण्डुलनिष्पत्तौ "अभूततद्भावे," पा०सू०५।४।५०।या १ "कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः"– पा० सू० ५ । ४ ।५० 'फलीकरणान्' तण्डुलादीन्'उपास्यति' उत्क्षिपति उत्करे । 'कपालेन' मध्यमेन प्रथमं नातिक्रामेदिति '**अधोऽधः**' अधस्तान्नातिदूरे 'कृष्णाजिनम्'–इति, 'अधोऽध इत्येतद्योगनिमित्ता द्वितीया–( पा० सू० २ । ३ । २ वा० २ ) । कृष्णाजिनस्याधस्तात्, समीप इत्यर्थः ( का० श्रौ० सू० ३ । १६१ ) ॥ ३३ ॥

---

१–'मुक्त एव' इति ख ग. घ ङ । २–३'विमुञ्चति' इति क. । –'नास्त्येतत् ज. झ. ।

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिर एतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माकमयम्भविष्यत्यस्माकमयम्भविष्यतीति ॥ ३४ ॥

ततो देवाः । सर्वं यज्ञꣳ संवृज्याथ यत्पापिष्ठं यज्ञस्य भागधेयमासीत्तेनैनान्निरभजन्नस्ना पशोः फलीकरणैर्हविर्यज्ञात्सुनिर्भक्ता असन्नित्येष वै सुनिर्भक्तो यं भागिनं निर्भजन्त्यथ यमभागं निर्भजन्त्येवं स तावच्छꣳसत उत हि वशे लब्ध्वाह किं मा बभक्थेति स यमेवैभ्यो देवा भागमकल्पयंस्तमेवैभ्य एष एतद्भागं करोत्यथ यदधोऽधः कृष्णाजिनमुपास्यत्यनग्नावेवैभ्य एतदन्धे तमसि प्रवेशयति तथो एवासृक् पशो रक्षसां भागोऽसीत्यनग्नावन्धे तमसि प्रवेशयति तस्मात्पशोस्तेदनीं न कुर्वन्ति रक्षसाꣳ हि स भागः ॥ ३५ ॥ ३ ॥

इति सप्तमप्रपाठके तृतीयं ब्राह्मणम् ॥ [ १ । २ ]

---

विमुञ्चन्ति । अथ फलीकरणान् कपालेनाधोऽधः कृष्णाजिनमुपास्यति । रक्षसां भागाऽसि-(वा० सं० २।२३ ) इति ॥

देवाश्च वा असुराश्च-उभये प्राजापत्याः पस्पृधिरे एतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरे,-'अस्माकमयम्भविष्यत्यस्माकमयम्भविष्यति' इति ॥ ततो देवाः सर्वं यज्ञं संवृज्य, अथ यत् पापिष्ठं यज्ञस्य भागधेयमासीत्-तेनैनान्निरभजन्-अस्ना पशोः, फलीकरणैर्हविर्यज्ञात्-सुनिर्भक्ता असन्निति। एष वै सुनिर्भक्तो यं भागिनं निर्भजन्ति । अथ यमभागं निर्भजन्ति-एव स तावच्छंसते । उत हि वशे लब्ध्वाह-'किं मा बभक्थ' इति । स यमेवैभ्यो देवा भागमकल्पयन्-तमेवैभ्य एष एतद्भागं करोति । अथ यदधोऽधः कृष्णाजिनमुपास्यति-अनग्नावेवैभ्य एतदन्धे तमसि प्रवेशयति। तथो एवासृक् पशोः "रक्षसां भागोऽसि"-इति-अनग्नावन्धे तमसि प्रवेशयति। तस्मात् पशोस्तेदनीं न कुर्वन्ति । रक्षसां हि स भागः ॥

---

देवाश्च वै । प्रसन्ना ॥ ३४ ॥

ततो देवाः । 'सर्वं यज्ञं' हविर्यज्ञाख्यम्, 'संवृज्य' समाप्तिपूर्वं संहृत्य । अथेति । 'अथ' अनन्तरम् । 'भागधेयं' भाग एव भागधेयम्; स्वार्थिको धेयः ( पा० सू० ५ । ४ । ३६ । वा० २ ) । 'तेन' भागधेयेन पापिष्ठेन 'एनान्' असुरान् 'निरभजन्' निर्भक्तवन्तः; बहिर्यज्ञाद् कृतवन्तः । केन, कस्मात् ?

---

१-'देवाश्च च' इति ख. ग. ङ. । २-'देवा' इति ख. ग. । ३-'क्था अ' इति ख. ग. घ. ङ. । ४-'जन्त्यैव' इति ख. ग. घ. ङ. । एष एव पाठः साधीयान् प्रतीयते । शंसेराङ् पूर्वस्येच्छार्थकत्वात् "आशंसते"-इति पदस्यैव प्रकृते प्रयोक्तुमौचित्यात् । एवकारोऽध्याहृतः परतः प्रयुक्तः साधुरवकल्पते। पदादुत्तरस्यैव तत्प्रयोगस्य व्यावहारिकत्वात् । वाक्यादौ तत्प्रयोगस्यानौचित्यात्। भाष्यानुरोधात्तु मूलपाठे "एकार"-एवात्र निर्दिष्ट इति भाव्यम् ॥ ५-'बभक्थेति' इति क. । ६-'भ्य एवु' इति ख. ग. घ. ङ. । ७-'भ्य एव' इति ख. ग. घ. ङ. । ८-'भागः' इति ख. ग. । 'भागः' इति क. ।

सुᳪस्थिते यज्ञे । दक्षिणतः परीत्य पूर्णपात्रं निनयति तथा ह्युदग् भवति तस्माद्दक्षिणतः परीत्य पूर्णपात्रं निनयति देवलोके मेऽप्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्वारभ्य यजमानः ॥ १ ॥

---

## [अथ याजमानो विष्णुक्रमः]

**संस्थिते यज्ञे दक्षिणतः परीत्य पूर्णपात्रं निनयति । तथा ह्युदग् भवति । तस्माद्दक्षिणतः परीत्य पूर्णपात्रं निनयति । 'देवलोके मेऽप्यसद् इति' वै यजते-यो यजते । सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति । तदनूची दक्षिणा-यां ददाति, सैति । दक्षिणामन्वारभ्य यजमानः ॥**

---

आह-"अस्ना, पशोः" । असृक्शब्दस्य असन्नादेशः ( पा० सू० ६ । १।६३ ) 'अस्ना' लोहितेन 'पशोः' 'निरभजन्' । 'फलीकरणैः' पाण्डुरभागैः 'हविर्यज्ञात्' निर्भजन्तोऽभूवन् । 'एष सुनिर्भक्तः' 'भागिनं' स्वल्पभागेनापि भक्तम् । 'अभागं' भागमदत्त्वा यं 'निर्भजन्ति' । 'सः' भागी प्रथमम् 'शंसते' एव । 'उत' अपि । अबलो हि बलवतां वशे भवति । 'लब्ध्वा' आसाद्य 'आह' ब्रूते-कुतश्चित्कालपर्यायात् । 'किं' त्वं 'मा' मां 'बभक्थ', मनसि किं मह्यं त्वया दत्तमित्यर्थः । 'यं भागम्' 'एभ्यः' रक्षोभ्यः 'देवाः' 'अकल्पयन्' कल्पितवन्तः । 'उपास्यति' समीपे प्रक्षिपति । अग्निहीने 'अन्धे तमसि 'प्रवेशयति', 'तथा' 'पशोः असृक्' अपि । **तस्मादिति** । तेदनीकरणाभावेन रक्षोभागः । तेदनीकरणेन लोहितं सिद्धम् ॥ ३९ ॥ ३ । [ ९.२ ] ॥

श्रीमतोऽवन्तिनाथस्य विक्रमादित्यभूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छतपथश्रुतिम् ॥

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्ये हविर्यज्ञेषु नवमाध्यायस्य द्वितीयं ब्राह्मणम् ।

---

**संस्थिते यज्ञे** । याजमानकर्माभिधायि ब्राह्मणमेतत् । 'दक्षिणतः परीत्य' अध्वर्युः 'निनयति' । 'हि' यतः, 'तथा' कृते 'उदग् भवति', परीत्येत्युक्ते दक्षिणादागत्य निनयनायोदगागमनं भवति । उदपात्रनिनयनस्यानुवादो न सर्वतो विधिः । कुतः ? "अथ विष्णुक्रमान् क्रमते"-इति ( श० प० १ ९ । ३ । ८ ) परतः 'अथ'-शब्देनानन्तर्यवचनं संयुज्य पदार्थान्तराणां विधानात् । तथा ह्युदगित्ययं दक्षिणतः परीत्येत्यर्थवादोऽयम् । पूर्णनिनयने **देवलोके मेऽप्यादि** । अयं यज्ञः 'असत्' भवतु । एवमर्थं यजमानो 'यजते'; 'यो यजते, स यज्ञोऽस्य यजमानस्य देवलोकमेवाभिप्रैति' । मां संस्कृतवानतो, अतो मया प्रत्युपकरणीयमित्यभिप्रायः । 'तदनूची' दक्षते: समृद्ध्यर्थस्य ( भ्वा० आ० ६०९ धा० पा० ) दक्षिणारूपम् । यज्ञसमृद्ध्यर्थं यज्ञमनु विलग्ना दक्षिणेति । 'दक्षिणामन्वारभ्य' सा हि परिक्रयार्था; ऋत्विङ्निष्पादिता परिक्रीयते, यथान्यत्रापि परिक्रयसम्बद्धः परिक्रेता, एवमत्रापि ॥ १ ॥'

१ 'मेऽप्यसदिति' इति ग. । २-'तेमनी' इति ज. ।

स ऽएष देवयानो वा पितृयाणो वा पन्थाः । तदुभयतोऽग्निशिखे समोषन्त्यौ तिष्ठतः प्रति तमोषतो यः प्रत्युष्योऽत्यु तᳬं सृजेते योऽतिसृज्यः शान्तिरापस्तदेतमेवैतत्पन्थानᳬं शमयति ॥ २ ॥

पूर्णं निनयति । सर्वं वै पूर्णᳬं सर्वेणैवैनमेतच्छमयति सन्ततमव्यवच्छिन्नं निनयति सन्ततेनैवैनमेतदव्यवच्छिन्नेन शमयति ॥ ३ ॥

यद्वेव पूर्णपात्रं निनयति यद्वै यज्ञस्य मिथ्या क्रियते व्यस्य तद्वृहन्ति क्षण्वन्ति । शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति ॥ ४ ॥

---

एष देवयानो वा पितृयाणो वा पन्थाः । तदुभयतोऽग्निशिखे समोषन्त्यौ तिष्ठतः । प्रति तमोषतो–यः प्रत्युष्यः, अत्यु तं सृजेते योऽतिसृज्यः । शान्तिरापः । तदेतमेवैतत्पन्थानं शमयति ॥ पूर्णं निनयति । सर्वं वै पूर्णम् । सर्वेणैवैनमेतच्छमयति । सन्ततमव्यवच्छिन्नं निनयति । सन्ततेनैवैनमेतदव्यवच्छिन्नेन शमयति ॥ यद्वेव पूर्णपात्रं निनयति । यद्वै यज्ञस्य मिथ्या क्रियते–व्यस्य तद्वृहन्ति, क्षण्वन्ति । शान्तिरापः । तदद्भिः शान्त्या शमयति,

---

**स एष देवयानः** । आत्मयाजिनस्तस्य कुणपादिमोक्षप्राप्तेः, देवयाजिनः पितृलोकः पन्था: । एवञ्च केवलकर्मिणः पुनरावृत्तिर्दर्शिता । यतस्त्वत्रायमेव 'अन्वावर्त्तते'–इत्युपसंहारः ( श० प० १ । ९ । ३ । २० ) अपि हि न ऋग्वेचः श्रुतम्–द्वे सृती अशृणव पितॄणामित्युपक्रम्य, ज्ञानसमुच्चितकर्मिणः पुनरावृत्तिर्दर्शिता–"ते य एवमेतद्विदुः"–इत्यादिना ( श० प० १४ । ९ । १ । ४–१९ ) । 'वा'-शब्दो व्यवस्थितः 'तदुभयतः' 'अग्निशिखे' अग्निज्वाले 'ओषन्त्यौ' भस्मसात्कुर्वन्त्यौ 'सन्तिष्ठतः' । दहनान्मुक्तिरित्यर्थः । ज्ञानसहकारिकर्मकारी यजमानः 'अतिसृज्यः' । ज्ञानिनश्चोष्ण पन्थानञ्च उष्ण-शमनसमर्थाभिरद्भिः शमयति । शान्तिसाधनं 'शान्तिः' । ज्ञानसमुच्चितकर्मफलमलक्षालकं भवतीति सम्मतम् । केवलस्य स्वर्गादिफलं तु कार्यारम्भादौपचारिकमिति यदि फलभोगाय देवलोकं यजमानो याति, स देव एव । स एष देवफलभोगार्थं देवानेति; "देवो भूत्वा देवानप्येतीति वचनात् । पितॄंश्च केवलात्कर्मणः । 'तदुभयतः' तत्र उभयतः, उभयोरपि मार्गयोः 'अग्निशिखे' सूर्यरश्मयः 'ओषतः' दहतः । योऽकृतकृत्यः, तमोषतः; यस्तु कृतनियतकर्मा, तमतिसृजतः । परन्त्वनेन पूर्णसेकेन शान्तं जातं 'यः' 'प्रत्युष्यः' "उष दाहे" ( धा० पा० भ्वा० प० ६९७ , प्रतिदहनार्हः 'तं' 'प्रत्योषतः' प्रतिदहतः । यथा दर्शितयज्ञादावेव एवाग्निसंयोगो निमित्तमिति, एवं तदपि तं प्रदीप्ते दहतः । 'अति-सृजेते' अतिसर्जनम् विसर्जनम् ॥ २ ॥

"**पूर्णम्**" । आपां पूर्णम्; 'शान्तिरापः'–इति वचनात् (श० प०१कां० ९ अ० ३ ब्रा० २ कं ) उदकस्यैवं तावदाधिदैविकं निनयनस्य प्रयोजनम् ( का० श्रौ० सू० २ । १६२ ) ॥ ३ ॥

•अधियज्ञं दर्शयन्नाह–यद्वेवेति । 'यद्वै मिथ्या क्रियते यज्ञस्य' अकरणमन्यथाकरणञ्च, 'तद्विवृहन्ति'

---

१–'स एष' इति ख. ग. घ. ङ. । २–'व' इति ग. । ३–'क्षण्वन्ति' इति क. । ४–'इत्यस्मात् पूर्वं ( मां को किमत्रैव गच्छन्तीति यतस्तेऽतः किम् । इति पाठः कोष्ठान्तर्गतः क. पुस्तकेऽस्ति ।

पूर्णं निनयति । सर्वं वै पूर्णꣳ सर्वेणैवैतत्सन्दधाति सन्ततमव्यवच्छिन्नं निनयति सन्ततेनैवैतदव्यवच्छिन्नेन सन्दधाति ॥ ५ ॥

तदञ्जलिना प्रतिगृह्णाति । सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमिति यद्विवृढं तत्संदधाति ॥ ६ ॥

अथ मुखमुपस्पृशते । द्वयं तद्यस्मान्मुखमुपस्पृशतेऽमृतं वा ऽआपोऽमृतेनैवैतत्सꣳस्पृशत ऽएतदु चैवैतत्कर्मात्मन् कुरुते तस्मान्मुखमुपस्पृशते ॥ ७ ॥

---

तदद्भिः संदधाति ॥ पूर्णं निनयति । सर्वं वै पूर्णम् । सर्वेणैवैतत्संदधाति । सन्ततमव्यवच्छिन्नं निनयति । सन्ततेनैवैतदव्यवच्छिन्नेन संदधाति । तदञ्जलिना प्रतिगृह्णाति-सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सं शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् । ( वा० सं० २ । २४ ) इति । यद्विवृढं तत् संदधाति । अथ मुखमुपस्पृशते । द्वयं तद्—यस्मान्मुखमुपस्पृशते । अमृतं वा आपः । अमृतेनैवैतत्संस्पृशते । एतदु चैव—एतत्कर्मात्मन्न कुरुते तस्मान्मुखमुपस्पृशते ॥

---

व्यर्थं कुर्वन्ति 'यज्ञीयापः' 'क्षण्वन्ति' 'क्षिणु हिंसायाम्' ( धा० पा० त० उ० ३ ) हिंसन्ति, दुःखायन्तीत्यर्थः ॥ ४ ॥ ५ ॥

तदञ्जलिना । ( का० श्रौ० सू० ३ । १६२ ) यद्यपि "अनुमार्ष्टु तन्वो यद्विलिष्टम्'—इतिलिङ्गात् मुखोपस्पर्शनाङ्गता मन्त्रस्य प्रतिभाति तथापि वाक्यात्प्रतिग्रहणाङ्गता । तथाहि "यद्विवृढं तत्सन्दधाति"—इति ग्रहणार्थवाद एव परतो दृश्यते, अर्थवादान्तराभावात्; अथशब्देन च मुखोपस्पर्शनस्य व्यवधानार्थवादान्तरदर्शनाच्च । लिङ्गञ्चाविरुद्धमेव; मुखवद्धस्तयोरपि शरीरैकदेशत्वात् । यद्विवृढमिति । यजमानस्यैव यज्ञो वर्तते; तत्रैव स्थितस्य 'यद्विवृढं तत्सन्दधाति'—इत्यभिप्रायः । कण्वानान्तु "तदञ्जलिना प्रतिगृह्णाति, तत्र जपति संवर्चसेति" । गृह्णतो यज्ञवीर्यमत्र च जप्यमानः प्रतिग्रहणाय स्पर्शनेऽपि प्रकाशयिष्यति । कः पुनः प्रतिगृह्णाति ? यजमानः; अध्वर्योर्निनयने व्यापृतत्वात्, अन्यः कोऽपीति सिद्धे आशीर्लिङ्गत्वान्मन्त्रस्य यजमान एव । तथाच यज्ञस्य "यद्विवृढं तत्सन्दधातीति । उपपत्त्या, अत उत्तरत्र च (श० प० १ कां० ९ अ० ३ ब्रा० ७ कं० ) "एतदु चैवैतत् कर्म कुरुते"—इति मन्त्रवाक्यशेषैरेव च सर्वमेवातः परं याजमानमित्यवसीयते ॥ ६ ॥

अथ मुखम् ( का० श्रौ० सू० ३ । १६३ । ) । "एतदु चैवैतत्कर्मात्मन् कुरुते"—इति शाखायजमान आत्मीयमेव मुखमद्भिरुपस्पृशत इति गम्यते । यस्मात् कारणान्मुखं स्पृशति, 'तद् द्वयम्' द्वे ते कारणे इत्यर्थः । तत्रैकं तावत्—'अमृतेनैवैतदात्मानं संस्पृशते'—इति । कथमद्भिः संस्पृश्यमाने अमृतेन

---

१—'यद्वृद्धं' इति ज. । २—'मुखोपस्पर्शनं अस्य' इति ज. । ३ कण्वशाखीयानां प्रतिग्रहोत्तर मन्त्रजपं प्रतिजानानेन भाष्यकृता प्रकृतस्यैतस्य शतपथश्रुतिपाठस्य माध्यन्दिनशाखीयत्वं सूच्यते । किन्तु माध्यन्दिनसंहितात्वेन प्रसिद्धस्य यजुर्वेदसंहितापाठस्य मन्त्रपाठक्रमानुसारणीयं प्रकृता शतपथश्रुतिर्नास्तीत्यन्यत्र सविवादं प्रदर्शितमस्माभिः । ४—'एतदु चैवैतत्कर्मात्मन् कुरुते' इति ज ।

अथ विष्णुक्रमान् क्रमते । देवान्वा ऽएष प्रीणाति यो यजत ऽएतेन यज्ञेनऽर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान् प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वा तानेवाभिप्रक्रामति ॥ ८ ॥

यद्वेव विष्णुक्रमान् क्रमते । यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्वेवैष ऽएतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते तस्माद्विष्णुक्रमान् क्रमते तद्वा ऽइत एव पराचीनं भूयिष्ठा ऽइव क्रमन्ते ॥ ९ ॥

तदु तत्पृथिव्यां विष्णुर्व्यक्रंस्त । गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन

---

अथ विष्णुक्रमान् क्रमते । देवान्वा एष प्रीणाति–यो यजते–एतेन यज्ञेन–ऋग्भिरिव त्वद्, यजुर्भिरिव त्वद्, आहुतिभिरिव त्वत् । स देवान् प्रीत्वा तेष्वपित्वी भवति । तेष्वपित्वी भूत्वा तानेवाभिप्रक्रामति ॥ यद्वेव विष्णुक्रमान् क्रमते । यज्ञो वै विष्णुः । स देवेभ्य इमां विक्रान्तिं विचक्रमे–यैषामियं विक्रान्तिः । इदमेव प्रथमेन पदेन पस्पार, अथेदमन्तरिक्षं द्वितीयेन, दिवमुत्तमेन, एताम्वेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते । तस्माद्विष्णुक्रमान् क्रमते । तद्वा इत एव पराचीनं भूयिष्ठा इव क्रमन्ते ॥ तदु तत् "पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण छन्दसा । ततो निर्भक्तो योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः । अन्तरिक्षे विष्णुर्व्य-

---

संस्पृशते ? तदाह–अमृतं वा आपः । इति । यत्त देवानामन्नममृतम्, ता आपः; आप एव हि शुद्धतमा अमृतमित्यभिप्रायः । अमृतसंस्पर्शनं यजमानेन कर्तव्यमित्येकं कारणम् । अपरमपि–एतच्च कर्म आत्मनि 'कुरुते' यजमानः । कथम् ? यज्ञो वा आपः; आपश्च सश्लेषणहेतुरित्यभिप्रायः ॥ ७ ॥

**अथ विष्णुक्रमान्** ( का० श्रौ० सू० ३ । १६४ । ) विष्णोः यज्ञस्य सम्प्रवेशमिव दत्त्वा 'देवान् प्रीत्वा', देवेषु मध्ये 'अपित्वी' भागी 'भूत्वा' च उपैति विष्णुक्रमैर्देवयाजीत्यर्थः । "अनुपसर्गाद्वा" इति ( पा० सू० १ । ३ । ४३ ) क्रमेरात्मनेपदम् ॥ ८ ॥

**यद्वेव विष्णुक्रमान्** । यजमानशरीरस्थ एव 'यज्ञो विष्णुः' यजमानार्थं 'विक्रमते' । 'तद्वै' तत्र 'इत एव' लोकात् 'पराचीनम्' ऊर्द्ध्वम्, अन्तरिक्षं दिवमित्येवं 'भूयिष्ठा इव' बहुतमा इव 'क्रमन्ते' ॥९॥

विष्णुक्रमणे मन्त्राः–"**तदु तत् पृथिव्याम्**"–इति प्रसन्ना । "इत्येवमिमॉंल्लोकान्"–इति उत्तरपक्षस्यार्थवादः । गम्यत इति 'गतिः', प्रतितिष्ठन्त्यस्यामिति 'प्रतिष्ठा' । 'तस्य' आदित्यस्य 'ये रश्मयः' कदम्बकेसरवदनन्तभेदाः, 'ते सुकृतः' ये पूर्वे यजमानाः तेजःशरीराः । उपरित ( न ) मेव 'पद्'

---

१–'ष एत' इति ख. ग. घ. ङ. । २–'ष्ठा इव' इति ख. ग. घ. ङ. । ३–'यं' इति ख. ।

छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मो दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म ऽइत्येवमिमांल्लोकान्त्समारुह्याथैषा गतिरेषा प्रतिष्ठा य ऽएष तपति तस्य ये रश्मयस्ते सुकृतोऽथ यत्परं भाः प्रजापतिर्वा स स्वर्गो वा लोकस्तदेवमिमाँल्लोकान्त्समारुह्याथैतां गति मेतां प्रतिष्ठां गच्छति परस्तात् त्वेवार्वाङ् क्रमेत य ऽइतोऽनुशासनं चिकीर्षेद् द्वयं तद्यस्मात्परस्तादर्वाङ् क्रमते ॥ १० ॥

अपसरणतो ह वा ऽअग्रे देवा जयन्तोऽजयन् । दिवमेवाग्रेऽथेदमन्तरिक्षमथेतोऽनपसरणात्सपत्नाननुदन्त तथो ऽएवैष एतदपसरणतं ऽएवाग्रे जयन् जयति दिवमेवाग्रेऽथेदमन्तरिक्षमथेतोऽनपसरणात्सपत्नान्नुदत ऽइयं वै पृथिवी प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ ११ ॥

---

क्रंस्त त्रैष्टुभेन छन्दसा । ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः । दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा । ततो निर्भक्तो योऽस्मान् द्वेष्टि यश्च वयं द्विष्मः''—इत्येवमिमाँल्लोकान्त्समारुह्य—अथैषा गतिः, एषा प्रतिष्ठा—य एष तपति । तस्य ये रश्मयः—ते सुकृतः, अथ यत्परं भाः—प्रजापतिर्वा सः, स्वर्गो वा लोकः । तदेवमिमाँल्लोकान्त्समारुह्य—अथैतां गतिमेतां प्रतिष्ठां गच्छति ॥ परस्तात् त्वेवार्वाङ् क्रमेत—य इतोऽनुशासनं चिकीर्षेत् । द्वयं तद्—यस्मात् परस्तादर्वाङ् क्रमते ॥ अपसरणतो ह वा अग्रे देवा जयन्तोऽजयन्—दिवमेवाग्रे, अथेदमन्तरिक्षम्, अथेतोऽनपसरणात्सपत्नाननुदन्त । तथो एवैष एतदपसरणत एवाग्रे जयन् जयति—दिवमेवाग्रे, अथेदमन्तरिक्षम्, अथेतोऽनपसरणात्सपत्नान्नुदते । इयं वै पृथिवी

---

यज्ञरूपः 'प्रजापतिः', 'स्वर्गो वा लोकः अज्ञानानां कर्मकर्तॄणां प्रजानां पतिः, ज्ञानिनामुपभोग्यं स्थानम्, 'तत्' तत्र; ते गच्छन्तीत्यभिप्रायः । 'भाः' प्रकाशमात्रं सूर्यरूपम् । ( पक्षान्तरोपन्यासः ) ''परस्तात् त्वेव'' । 'तु'—शब्दः स्वशब्दार्थे 'एव'—इत्यवधारणार्थः । 'इतः' अस्मादेव लोकात् 'अनुशासनम्' अस्मिन्नेव लोके फलोपभोगं बहुकालमाशास्ते, सः 'अर्वाङ्' विक्रमणेनैव 'यस्मात्' अध्वर्यवः 'परस्तात्' क्रमेत, 'तद्द्वयं' कारणम् ॥ १० ॥

**अपसरणतो ह** । जितापसरणेन जितवन्तो द्युलोकाख्यम्, अस्माल्लोकादपसृत्य असुरान् हतवन्तो देवाः । द्वितीयश्च फलोपभोगानन्तरं प्रतिष्ठायां प्रच्युतानां स्वर्गाल्लोकान्निरुपद्रवात् । ततश्च यदितः पराचीनं क्रमेत, तदेतां गतिं गत्वा 'प्रतिष्ठायां प्रतितिष्ठति' ॥ ११ ॥

---

१—'म्मो' इति क. । २—'द्विष्म इत्येव' इति ख. ग. ङ. । ३—'य एष' इति ख. ग. ङ. । ४—'गतिमेतां' ति ख. ग. । ५—'य इतो' इति ख. ग. ङ. । ६—'क्रमते' इति क. । ७—'त एवा' इति ख. ग. घ. ङ. ।

तदु तद्दिवि विष्णुर्व्यक्रंस्त। जागतेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽस्मादन्नादस्यै प्रतिष्ठाया ऽइत्यस्या ᳬ हीद ᳬ सर्वमन्नाद्यं प्रतिष्ठितं तस्मादाहास्मादन्नादस्यै प्रतिष्ठाया ऽइति ॥ १२ ॥

अथ प्राङ् प्रेक्षते। प्राची हि देवानां दिक् तस्मात् प्राङ् प्रेक्षते ॥ १३ ॥

स प्रेक्षते। अगन्म स्वरिति देवा वै स्वरगन्म देवानित्येवैतदाह संज्योतिषाभूमेति सं देवैरभूमेत्येवैतदाह ॥ १४ ॥

अथ सूर्यमुदीक्षते। सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति तस्मात् सूर्यमुदीक्षते ॥ १५ ॥

---

प्रतिष्ठा। तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ तदु तद् "दिवि विष्णुर्व्यक्रंस्त जागतेन
छन्दसा—ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः। अन्तरिक्षे विष्णुर्व्य-
क्रंस्त त्रैष्टुभेन छन्दसा—ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः। पृथिव्यां
विष्णुर्व्यक्रंस्त गायत्रेण छन्दसा—ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः।
अस्मादन्नादस्यै प्रतिष्ठायै"—इति। अस्यां हीदं सर्वमन्नाद्यं प्रतिष्ठितम्। तस्मादाह—अस्मा-
दन्नादस्यै प्रतिष्ठाया इति ॥ अथ प्राङ् प्रेक्षते। प्राची हि देवानां दिक्। तस्मात् प्राङ् प्रेक्षते॥
स प्रेक्षते—"अगन्म स्वः" इति। देवा वै स्वः। अगन्म देवानित्येवैतदाह। सं ज्योतिषा
भूम (वा०सं०२।२५) इति। सं देवैरभूमेत्येवैतदाह ॥ अथ सूर्यमुदीक्षते। सैषा गतिः, एषा

---

**तदु तद्दिवि।** (का० श्रौ० सू० ३। १६४–१६६) यद्धि स्वर्गे अन्नाद्यम्, तदप्यस्मिन्नेव लोके प्रतिष्ठितम्; चन्द्रमसोऽप्याप्यायनं प्रतिपदि सान्नाय्येन क्रियते; अतः 'अस्मादन्नात्' निष्कामनं द्विषन् सर्वस्मान्निष्कासितो भवति ॥ १२ ॥

**अथ प्राङ् प्रेक्षते।** (का० श्रौ० सू० ३। १६७) प्राङ् निरीक्षणेन मन्तर्पिता गच्छन्तो देवा निरीक्षिता भवन्तीत्यभिप्रायः ॥ १३ ॥

**स प्रेक्षते।** (का० श्रौ० सू० ३। १६८) मञ्चाः क्रोशन्तीतिवत् 'स्वर्देवाः'; तेजःशरीरत्वात् ज्योतिर्देवाः। 'समभूम' तद्देवत्वं प्राप्ता इत्यर्थः ॥ १४ ॥

**अथ सूर्यमुदीक्षते।** (का० श्रौ० सू० ३ १६९–१७०) सूर्यः खलु यज्ञकर्तॄणां गन्तव्यं प्रतिष्ठा च ॥ १५ ॥

---

१-'तद्दिवि' इति क.। २-'द्वेष्टि' इति ख.। ३-'विष्णु' इति ग.। ४-'द्वेष्टि' इति ख.। ५-'र' इति क,। ६-'इति' इति ख. ग.। 'इति' इति क.। ७-'ते' इति क. ख. ग.।

स[1] ऽउदीक्षते । स्वयम्भूरसि श्रेष्ठो रश्मिरित्येष वै श्रेष्ठो रश्मिर्यत्सूर्यस्तस्मादाह स्वयम्भूरसि श्रेष्ठो रश्मिरिति वर्चोदा[2] ऽअसि वर्चो मे देहीति त्वेवाहं ब्रवीमीति ह स्माह याज्ञवल्क्यस्तद्ध्येव ब्राह्मणेनैष्टव्यं यद् ब्रह्मवर्चसी स्यादित्युतो ह स्माहौपोदितेयः[3] ऽएष वाव मह्यं गा[4] दास्यति गोदा गा मे देहीत्येवं यं कामं कामयते सोऽस्मै कामः समृद्ध्यते ॥ १६ ॥

अथावर्त्तते । सूर्यस्यावृतमन्वावर्त्त ऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्त्तते ॥ १७ ॥

अथ गार्हपत्यमुपतिष्ठते । द्वयं तद्यस्माद्गार्हपत्यमुपतिष्ठते गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद् गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति यावद्देवास्येह मानुषमायुस्तस्मा ऽएवैतदुपतिष्ठते तस्माद्गार्हपत्यमुपतिष्ठते ॥ १८ ॥

---

प्रतिष्ठा । तदेतां गतिमेतां प्रतिष्ठां गच्छति । तस्मात्सूर्यमुदीक्षते ॥ स उदीक्षते—स्वयम्भूरसि श्रेष्ठो रश्मिः—इति । एष वै श्रेष्ठो रश्मिः—यत्सूर्यः—तस्मादाह—'स्वयम्भूरसि श्रेष्ठो रश्मिः' इति । वर्चोदा असि वर्चो मे देहि—इति त्वेवाहं ब्रवीमि—इति ह स्माह याज्ञवल्क्यः । तद्ध्येव ब्राह्मणेनैष्टव्यम्—यद् ब्रह्मवर्चसी स्यादिति । उतो ह स्माहौपोदितेयः—एष वाव मह्यं गा दास्यति । गोदा गा मे देहीति । एवं यं कामं कामयते सोऽस्मै कामः समृद्ध्यते ॥

अथावर्तते—सूर्यस्यावृतमन्वावर्ते—इति । तदेतां गतिमेतां प्रतिष्ठां गत्वा, एतस्यैवावृतमन्वावर्त्तते ( वा० सं० २ । २६ ) अथ गार्हपत्यमुपतिष्ठते । द्वयं तद्—यस्माद्गार्हपत्यमुपतिष्ठते । गृहा वै गार्हपत्यः । गृहा वै प्रतिष्ठा । तद्गृहेष्वेवैतत् प्रतिष्ठायां प्रतितिष्ठति ।

---

स उदीक्षते ( का० श्रौ० सू० ३ । १६९–१७० ) तेजोघनो रश्मिशब्देनोच्यते । एषः तेषामतिशयः । 'याज्ञवल्क्य इत्याह स्म'—'वर्चोदा असि वर्चो मे देहीति' ( एतदेवाशास्महे वयम् ) 'अहमिति ब्रवीमि' । 'ब्राह्मणेन तदेष्टव्यम्' 'यत्' अहं ब्राह्मण्ययुक्तः स्यामिति तु 'आह स्म' उक्तवान् 'औपोदितेयः' । उपगम्य उदिता पितुरुपोदिता; ''स्त्रीभ्यो ढक्'' ( पा० सू० ४ । १ । १२० ) उपोदिताया अपत्यमिति विग्रहः । 'गा दास्यति' इति गो-प्रार्थना 'एवं' प्रजादिष्वपि वक्तव्यम् ॥ १६ ॥

अथावर्त्तते । प्रदक्षिणमावर्त्तते । एवं हि तस्य सूर्यस्यावृत्तिः ॥ १७ ॥

अथ गार्हपत्यम् । ( का० श्रौ० सू० ३ । १७१ ) कारणद्वयं तस्याप्युपस्थाने । सूर्योपस्थानादिना स्वर्गतिः, गार्हपत्योपस्थानेन स्वगृहे प्रतितिष्ठति । द्वितीयञ्च 'यावद्देवास्येह' मानुषायुष 'उपतिष्ठते' ॥ १८ ॥

---

१–'स उदीक्षते' इति ख. ग. घ. ङ. । २–'दा असि' इति ख. ग. घ. ङ. । ३–'य एव' इति ख. ग. घ. ङ. । ४–'मा' इति क. ।

स ऽउपतिष्ठते । अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासꣳ सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूयाऽइति नात्र तिरोहितमिवास्त्यस्थूरि णौ गार्हपत्यानि सन्त्वित्यनार्त्तानि नौ गार्हपत्यानि सन्त्वित्येवैतदाह शतꣳ हिमा इति शतं वर्षाणि जीव्यासमित्येवैतदाह तदप्येतदब्रुवन्नाद्रियेतापि हि भूयाꣳसि शताद्वर्षेभ्यः पुरुषो जीवति तस्मादप्येतदब्रुवन्नाद्रियेत ॥ १९ ॥

अथावर्त्तते । सूर्यस्यावृतमन्वावर्त्त ऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्त्तते ॥ २० ॥

अथ पुत्रस्य नाम गृह्णाति । इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवदिति यदि पुत्रो न स्यादप्यात्मन एव नाम गृह्णीयात् ॥ २१ ॥

यावद्धेवास्येह मानुषमायुः—तस्मा एवैतदुपतिष्ठते । तस्माद्गार्हपत्यमुपतिष्ठते ॥ स उपतिष्ठते—अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासम्, सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूयाः—इति । नात्र तिरोहितमिवास्ति । अस्थूरि णौ गार्हपत्यानि सन्तु इति । अनार्तानि नौ गार्हपत्यानि सन्तु—इत्येवैतदाह । शतं हिमाः—इति । शतं वर्षाणि जीव्यासमित्येवैतदाह । तदप्येतदब्रुवन्नाद्रियेत—अपि हि भूयांसि शताद्वर्षेभ्यः पुरुषो जीवति तस्मादप्येतद् ब्रुवन्नाद्रियेत ॥ अथावर्त्तते—सूर्यस्यावृतमन्वावर्त्ते—( वा० सं० २ । २७ ) इति । तदेतां गतिमेतां प्रतिष्ठां गत्वा—एतस्यैवावृतमन्वावर्त्तते ॥ अथ पुत्रस्य नाम गृह्णाति । इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवदिति । यदि पुत्रो न स्याद्—अथात्मन एव नाम गृह्णीयात् ॥

**स उपतिष्ठते** । 'अस्थूरि' 'णौ' असहाय-गो-वाह्यः स्थूरः, तत्रासहायमात्र लक्ष्यते; स्थूरोऽस्मिन्नस्तीति स्थूरि न स्थूरि अस्थूरि, ससहायि 'नौ' तव गार्हपत्ये कर्मणि प्रवृत्ते अहमिन्धनादिना पालकः, अस्थूरी गृहपतिः; त्वं कर्मणाम् अत आह—**अनार्तानी**ति । अस्थूरित्वेन च सामर्थ्यादाक्षिमं यजमानस्य जीवितमिति "शतं वर्षाणि जीव्यासमित्याह"—इति ( का० श्रौ० सू० । ३ । १७३ । ) विवृणोति ॥ १९ ॥

**अथावर्त्तते** ( का० श्रौ० सू० ३ । १७४ ) मन्त्रवर्णात् प्रादक्षिण्यञ्च; सूर्यस्यावृतमन्विति मन्त्रे दृश्यते, सूर्यो हि प्रादक्षिण्येन गच्छति ( का० श्रौ० सू० ३ । १७५ ) 'एतस्यैव' सूर्यस्य ॥ २० ॥

**अथ पुत्रस्य** ( का० श्रौ० सू० ३ । १७६ ) कथं पुनर्गृह्णाति ? "ततोऽसि तन्तुरसि"—इत्येतस्मिन्मन्त्रे ( का० श्रौ० सू० ३ । १७७ । ) तत्पदैरेकवाक्यभूतं गृह्णाति । कुतः ? काण्वसमाम्नानात् । 'इदं मे कर्म, इदं वीर्यम्, पुत्रो देवदत्तोऽनुसन्तनवत्'—इति । किमर्थं नाम गृह्णाति ? 'इदं मे' ,वीर्यं' विक्रमम्, 'पुत्रः' देवदत्तादिः 'अयम्' 'अनुसन्तनवत्' अनुसन्तनोतु । कथम् ? 'मे' मम 'इदं वीर्यमनुसन्तनवदिति' मा विच्छिन्द्यादित्येवमर्थम् । पक्षान्तरमाह—'यदि पुत्रो न स्यात्' कथञ्चित् पुत्ररहितश्चेत्, अजातपुत्रो मृतपुत्रो वा, तदा 'आत्मनो नाम गृह्णीयात्' । तथा च 'इदं मे कर्मेदं वीर्यं देवदत्तोऽहं सन्तनवानि'—इति नामग्रहणम् ॥ २१ ॥

• १—'स उप' इति ख. ग. घ. ङ. । २—'भूया इति'' इति ख. ग. घ. ङ. । ३—'यदि' इति ख. । ४—'ससहायि' इति ज. ङ. । ५—"अनेकेषु पुत्रेषु सर्वेषां ज्येष्ठस्य पुत्रस्य नामाभिव्याहृत्य" इति सांख्यायनः २।१२।११ -"प्रियस्य पुत्रस्य नाम गृह्णाति" इत्यापस्तम्बः । ४ । १६ । ४ ।

अथाहवनीयमुपतिष्ठते । प्राङ्मे यज्ञोऽनुसन्तिष्ठाता ऽइति तूष्णीमुपतिष्ठते ॥ २२ ॥

अथ व्रतं विसृजते इदमहं य एवास्मि सोऽस्मीत्यमानुष-इव वा ऽएतद्भवति यद्व्रतमुपैति न हि तदवकल्पते यद्ब्रूयादिदमहꣳ सत्यादनृतमुपैमीति तदु खलु पुनर्मानुषो भवति तस्मादिदमहं य एवास्मि सोऽस्मीत्येवं व्रतं विसृजेत ॥ २३ ॥ ४ ॥

इति सप्तमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ४ ॥

अथाहवनीयमुपतिष्ठते 'प्राङ्मे यज्ञोऽनुसन्तिष्ठात' इति । तूष्णीमुपतिष्ठते ॥

अथ व्रतं विसृजते—इदमहं य एवास्मि सोऽस्मि (वा० सं० २।२८) इति । अमानुष-इव वा एतद्भवति—यद्व्रतमुपैति । न हि तदवकल्पते यद्ब्रूयाद्—इदमहं सत्यादनृतमुपैमि इति । तदु खलु पुनर्मानुषो भवति । तस्माद् 'इदमहं य एवास्मि सोऽस्मि' इत्येवं व्रतं विसृजेत ॥

[ इति दर्शपूर्णमासेष्टिः सम्पूर्णा । ]

**अथाहवनीयम** । ( का० श्रौ० सू० ३ । १७८ गार्हपत्योपस्थानादिकर्मणा यत्पद न प्राप्नोति, अत उपस्थानयज्ञक्रिया प्रत्यकसंस्था जाता; सा च जघन्या, अधोगतित्वात्; अत आहवनीयोपस्थान विधत्ते प्राक्संस्थित्यै । अपि च प्रत्यग्गमनशब्दो हि नरकपातवाचकः; एवञ्चाधोगतिर्यज्ञस्य स्यात् । तूष्णीमिति । सामर्थ्यान्मन्त्रे प्राप्ते तूष्णीमुपस्थान विधेयमिति मन्त्रनिवृत्तिः क्रियते ॥ २२ ॥

**अथ व्रतम** । ( का० श्रौ० सू० ३ । १७९ पूर्वोक्तामितिकर्तव्यतामनूद्य यज्ञसमाप्तिर्व्रतविसर्गसम्बद्धा विधीयते; यदिदमुक्तं ''संस्थिते'' श० प० १ कां० १ । १ । ३ । ) इति, तदिदमवसरप्राप्तं व्रत विसृजते । स्वशाखायाम ''इदमहमनृतात् सत्यमुपैमि''— ( श० प० १ कां० १ । १ । ४ ) इति मन्त्रोच्चारोऽभिप्रेतः—अत एव पक्षान्तरन्यासो न कृतो भगवत्या श्रुत्या ॥

समाप्तोऽयं पौर्णमासः, सर्वास्विष्टिषु पशुबन्धेषु यागेषु सौत्रामण्यां च प्रकृतिभूतः । यद्यप्ययं कृताधानस्य भवति, तथापि आधानेष्टीनां तनूहविस्सञ्ज्ञकानां पौर्णमासयागः प्रकृतिः, तस्मात् पूर्वमुपदेश्यः । ननु तर्हि तनूहविषामेव सर्वेष्टिप्रकृतित्वं कृत्वा तान्येव पूर्वं कस्मान्नोपदिष्टानि ? सत्यम् ! किन्तु तेष्वितिकर्तव्यतावैकृत्यदर्शनात् सर्वप्रकृतित्वं न सम्भवति, तस्मात्पौर्णमासयाग एव पूर्वमुपदिष्टः ॥२३॥४॥[९।३] ॥

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्ये नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥

श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ शतपथभाष्ये नवमोऽध्यायः समाप्तः ॥ ९ ॥

इति सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥

भूभर्त्रा विक्रमार्केण कल्पमा कनकवेदिकाम । दानायाव्यास्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ १ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीना शुक्लयजुर्वेदीये माध्यन्दिनशतपथब्राह्मणभाष्ये हविर्यज्ञ नाम प्रथमं काण्डं समाप्तम् ॥१॥

१—''तूष्णीमिति लौकिकवागुच्चारणनिषेधः क्रियते, मन्त्राभावात् । एवंच तत्समीपे स्थित्वा तं विलोकयत्येव इति ह याज्ञिकदेवः ।